नद्यः समुद्वाहितचक्रवाकास्तटानि शीर्णान्यपवाहयित्वा।
दृप्ता नवप्रावृत-पूर्णभोगा द्रुतं स्वभर्त्तारमुपोपयान्ति ॥१३॥
नवाम्बुधारा हतकेशराणि द्रुतं परित्यज्य सरोरुहाणि।
कदम्बपुष्पाणि सकेशराणि वनानि हृष्टा भ्रमराः पतन्ति ॥१४॥
मार्गानुगः शैलवनानुसारी संप्रस्थितो मेघरवं निशम्य।
युद्धाभिकामः प्रतिनागशङ्की मत्तो गजेन्द्रः प्रतिसंनिवृत्तः ॥१५॥
मत्ता गजेन्द्राः मुदिता गवेन्द्रा वनेषु विश्रान्ततरा मृगेन्द्राः।
रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीड़ितो वारिधरैः सुरेन्द्रः ॥१६॥
वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वाताः समुदीर्णघोषाः।
प्रनष्टकुलाः प्रवहन्ति शीघ्रं नद्यो जलैर्विप्रतिपन्नमार्गाः ॥१७॥
नरैर्नरेन्द्रा इव पर्वतेन्द्राः सुरेन्द्रदत्तैः पवनोपनीतैः।
घनाम्बुकुम्भैरभिषिच्यमाना रूपं श्रियं स्वामिव दर्शयन्ति ॥१८॥
घनोपगूढं गगनं न तारा न भास्करो दर्शनमभ्युपैति।
नवैर्जलौघैर्धरणी वितृप्ता तमोविलिप्ता न दिशः प्रकाशाः ॥१९॥
महान्ति कूटानि महीधराणां धाराभिधौतान्यधिकं विभान्ति।
महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥२०॥
शीघ्र-प्रवेगा विपुलाः प्रपाता निर्धौतश्रृङ्गोपतला गिरीणाम्।
मुक्ताकलापप्रतिमाः पतन्तो महागुहोत्सङ्गतलैर्ध्रियन्ते ॥२१॥

## २२

# कुम्भकर्णनिधनम्

### युद्धकाण्डे—सप्तषष्टितमः सर्गः

स कुम्भकर्णस्य वचो निशम्य रामः सुपुङ्खान् विससर्ज वाणान्।
तैराहतो वज्रसमप्रवेगैर्न चुक्षुभे न व्यथते सुरारिः ॥१॥
यैः सायकैः सालवरा निकृत्ता वाली हतो वानरपुङ्गवश्च।
ते कुम्भकर्णस्य तदा शरीरे वज्रोपमा न व्यथयांबभूवुः ॥२॥
स वारिधारा इव सायकांस्तान् पिबञ् शरीरेण महेन्द्रशत्रुः।
जघान रामस्य शरप्रवेगं व्याविध्य तं मुद्गरमुग्रवेगम् ॥३॥

ततस्तु रक्षः क्षतजावलिप्तं वित्रासनं देवमहाचमूनाम् ।
विव्याध तं मुद्गरमुग्रवेगं विद्रावयामास चमुं हरीणाम् ।।४।।
वायव्यमादाय ततो वरास्त्रं रामः प्रचिक्षेप निशाचराय ।
समुद्गरं तेन जघान बाहुं स कृत्तबाहुस्तुमुलं ननाद ।।५।।
स तस्य बाहु-र्गिरिश्रृङ्गकल्पः समुद्गरो राघवबाणकृत्तः ।
पपात तस्मिन् हरिराजसैन्ये जघान तां वानरवाहिनीञ्च ।।६।।
स कुम्भकर्णोऽस्त्रनिकृत्तबाहुर्महेन्द्रकृत्ताग्र इवाचलेन्द्रः ।
उत्पाटयामास करेण वृक्षं ततोऽभिदुद्राव रणे नरेन्द्रम् ।।७।।
स तस्य बाहुं सहसालवृक्षं समुद्यतं पन्नगभोगकल्पम् ।
ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन ।।८।।
स कुम्भकर्णस्य भुजो निकृत्तः पपात भूमौ गिरि-संनिकाशः ।
विचेष्टमानोऽभिजघान वृक्षाञ्शैलञ्शिला वानरराक्षसांश्च ।।९।।
तं छिन्नबाहुं समवेक्ष्य रामः समापतन्तं सहसा नदन्तम् ।
द्वावर्द्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य ।।१०।।
तौ तस्य पादौ प्रदिशो दिशश्च गिरीन् गुहाश्चैव महार्णवं च ।
लङ्कां च सेनां कपिराक्षसानां विनादयन्तौ विनिपेततुश्च ।।११।।
निकृत्तबाहुर्विनिकृत्तपादो विदार्य्य वक्त्रं वड़वामुखाभम् ।
दुद्राव रामं सहसाभिगर्जन् राहुर्यथा चन्द्रमिवान्तरीक्षे ।।१२।।
अपूरयत्तस्य मुखं शिताग्रै रामः शरैर्हेमपिनद्धपुङ्खैः ।
स पूर्णवक्त्रो न शशाक वक्तुं चुकूज कृच्छ्रेण मुमोह चापि ।।१३।।
अथाददे सूर्य्यमरीचिकल्पं स ब्रह्मदण्डान्तककालकल्पम् ।
अरिष्टमैन्द्रं निशितं सुपुङ्खं रामः शरं मारुततुल्यवेगम् ।।१४।।
तं वज्रजाम्बूनदचारुपुङ्खं प्रदीप्तसूर्य्यज्वलनप्रकाशम् ।
महेन्द्रवज्राशनितुल्यवेगं रामः प्रचिक्षेप निशाचराय ।।१५।।
स सायको राघवबाहुचोदितो दिशः स्वभासा दश संप्रकाशयन् ।
विधूमवैश्वानरदीप्तदर्शनो जगाम शक्राशनिवीर्य्यविक्रमः ।।१६।।
स तन्महापर्वतकूटसंनिभं निवृत्तदंष्ट्रं चलचारुकुन्तलम् ।
चकर्त्त रक्षोऽधिपतेः शिरस्तथा यथैव वृत्रस्य पुरा पुरन्दरः ।।१७।।
तद्रामबाणाभिहतं पपात रक्षःशिरः पर्वतसन्निकाशम् ।
बभञ्ज चर्य्यागृह-गोपुराणि प्राकारमुच्चं तमपातयच्च ।।१८।।

न्यपतत् कुम्भकर्णोऽथ स्वकायेन निपातयन्।
प्लवङ्गमानां कोटचश्च परितः संप्रधावताम् ।।१९।।
तस्मिन् हते ब्राह्मणदेवशत्रौ महाबले संयति कुम्भकर्णे।
चचाल भूर्भूमिधराश्च सर्वे हर्षाच्च देवास्तुमुलं प्रणेदुः ।।२०।।
स देवलोकस्य तमो निहत्य सूर्य्यो यथा राहुमुखाद्विमुक्तः।
तथा व्यभासीद् भुवि वानरौघे निहत्य रामो युधि कुम्भकर्णम् ।।२१।।
प्रहर्षमीयुर्बहवस्तु वानराः प्रबुद्ध पद्मप्रतिमैरिवाननैः।
अपूजयन् राघवमिष्टभागिनं हते रिपौ भीमबले दुरासदे ।।२२।।

## २३

## रामराज्यवर्णनम्

### युद्धकाण्डे—एकत्रिंशदुत्तरशततमः सर्गः

अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह।
पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ।।१।।
ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह।
रामं रत्नमये पीठे सहसीतं न्यवेशयत् ।।२।।
वसिष्ठो वामदेवश्च जावालिरथ काश्यपः।
कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा ।।३।।
अभ्यसिञ्चन् नरव्याघ्रं प्रसन्नेन सुगन्धिना।
सलिलेन सहस्राक्षं वसवो वासवं यथा ।।४।।
ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम्।
अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ।।५।।
तस्यान्ववाये राजानः क्रमाद् येनाभिषेचिताः।
सभायां हेमक्लृप्तायां शोभितायां महाजनैः ।।६।।
रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः।
नानारत्नमये पीठे कल्पयित्वा यथाविधि ।।७।।
किरीटेन ततः पश्चाद् वसिष्ठेन महात्मना।
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः ।।८।।

छत्रं तस्य च जग्राह शत्रुघ्नः पाण्डरं शुभम् ।
श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥९॥
अभिषेके तदर्हस्य तदा रामस्य धीमतः ।
भूमिः सस्यवती चैव फलवन्तश्च पादपाः ॥१०॥
बिभीषणोऽथ सुग्रीवो हनूमाञ्जाम्बवांस्तथा ।
सर्वे वानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥११॥
यथार्हं पूजिताः सर्वे कामै रत्नैश्च पुष्कलैः ।
प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥१३॥
स राज्यमखिलं शासन्निहतारिर्महायशाः ।
राघवः परमोदारो रराज परया मुदा ॥१४॥
न पर्य्यदेवन् विधवा न च व्यालकृतं भयम् ।
न व्याधिजं भयं चासीद् रामे राज्यं प्रशासति ॥१५॥
निर्दस्युरभवल्लोको नानर्थं कञ्चिदस्पृशत् ।
न च स्म वृद्धा बालानां प्रेतकार्य्याणि कुर्वते ॥१६॥
सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत् ।
राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् ॥१७॥
रामो रामो राम इति प्रजानामभवन् कथाः ।
रामभूतं जगदभूद्रामे राज्यं प्रशासति ॥१८॥
नित्यपुष्पा नित्यफलास्तरवः स्कन्धविस्तृताः ।
काले वर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः ॥१९॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा लोभविवर्जिताः ।
स्वकर्मसु प्रवर्त्तन्ते तुष्टाः स्वैरेव कर्मभिः ॥२०॥
आसन् प्रजा धर्मरता रामे शासति नानृताः ।
सर्वे लक्षणसम्पन्नाः सर्वे धर्मपरायणाः ॥२१॥

# गङ्गाष्टकम्

## वाल्मीकिरचितम्

मातः शैलसुतासपत्नि ! वसुधाशृङ्गारहारावलि !
स्वर्गारोहण-वैजयन्ति ! भवतीं भागीरथीं प्रार्थये ।
त्वत्तीरे वसतस्तदम्बु पिबतस्तद्वीचिमुत्प्रेङ्खतः ।
त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥१॥
त्वत्तीरे तरुकोटरान्तर्गतो गङ्गे ! विहङ्गो वरम् ।
त्वत्तीरे नरकान्तकारिणि ! वरं मत्स्योऽथवा कच्छपः ।
नैवान्यत्र मदान्धसिन्धुरघटासंघट्टघण्टारणत्—
कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥२॥
काकैर्निष्कुषितं श्वभिः कवलितं वीचीभिरान्दोलितम्
स्त्रोतिभिश्चलितं तटान्तलुलितं गोमायुभिर्लुण्ठितम् ।
दिव्यस्त्रीकरचारुचामरमरुत्-संवीज्यमानः कदा
द्रक्षेऽहं परमेश्वरि! त्रिपथगे! भागीरथि! स्वं वपुः ॥३॥
अभिनवविसवल्ली पादपद्मस्य विष्णो
र्मदनमथनमौलेर्मालतीपुष्पमाला ।
जयति जयपताका काप्यसौ मोक्षलक्ष्म्याः
क्षयितकलिकलङ्का जाह्नवी मां पुनातु ॥४॥
यत्तत्तालतमालसालसरलव्यालोलवल्लीलता—
च्छन्नं सूर्य्यकरप्रतापरहितं शङ्खेन्दुकुन्दोज्ज्वलम् ।
गन्धर्वामरसिद्धकिन्नरबधूतुङ्गस्तनास्फालितं
स्नानाय प्रतिवासरं भवतु मे गाङ्गं जलं निर्मलम् ॥५॥
गाङ्गं वारि मनोहारि मुरारिचरणच्च्युतम् ।
त्रिपुरारिशिरश्चारि पापहारि पुनातु माम् ॥६॥
पापापहारि दुरितारि तरङ्गधारि
दूरप्रचारि गिरिराजगुहाविदारि ।
झङ्कारकारि हरिपादरजोविहारि
गाङ्गं पुनात्वनुदिनं शुभकारि वारि ॥७॥

वरमिह गङ्गातीरे शरटः करटः कृशः शुनीतनयः।
न पुनर्दूरतरस्थः करिवरकोटीश्वरो नृपतिः॥८॥
गङ्गाष्टकं पठति यः प्रयतः प्रभाते
वाल्मीकिना विरचितं शुभदं मनुष्यः।
प्रक्षाल्य सोऽत्र कलिकल्मषपङ्कमाशु
मोक्षं लभेत पतति नैव पुनर्भवाब्धौ॥९॥

२५

# महाभारतम्

## आदिपर्व

### तृतीयोऽध्यायः

## जनमेजयकथा

जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रम् उपास्ते। तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति। तेषु तत्सत्रमुपासीनेष्वागच्छत् सारमेयः। जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् सः। तं माता रोरूयमाणमुवाच, किं रोदिषि? केनास्यभिहत इति। स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति। तं माता प्रत्युवाच व्यक्तं त्वया तत्रापराद्धं येनात्राभिहत इति। स तां पुनरुवाच नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिह इति।

तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्त्ता तत्सत्रमुपागच्छद् यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते। स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किञ्चिदपराध्यति नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति। न किञ्चिदुक्तवन्तस्ते। सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति। जनमेजय एवमुक्तो देवशुन्या सरमया भृशं संभ्रान्तो विषण्णश्चासीत्।

स तस्मिन् सत्रे समाप्ते हस्तिनापुरं प्रत्येत्य पुरोहितमनुरूपमन्विष्यमाणः परं यत्नमकरोद् यो मे पापकृत्यां शमयेदिति। स कदाचिन् मृगयां गतः पारिक्षितो जनमेजयः कस्मिंश्चित् स्वविषय आश्रमम् अपश्यत्। तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम। तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम। तस्य तं पुत्रमभिगम्य जनमेजयः पारिक्षितः पौरोहित्याय वव्रे। स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव पुत्रो मम पुरोहितोऽस्त्विति।

स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय पुत्रोऽयं मम महातपस्वी स्वाध्यायसम्पन्नो मत्तपोवीर्य्यसंभृतः। समर्थोऽयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्याम्। अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कञ्चिदर्थमभियाचेत्तं तस्मै दद्यादयं। यद्येतदुत्सहसे ततो नयस्वैनमिति। तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवंस्तत्तथा भविष्यतीति।

स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच मयायं वृत उपाध्यायो यदयं ब्रूयात् तत्कार्य्यम् अविचारयद्भिर्भवद्भिरिति। तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः। स तथा भ्रातॄन् सन्दिश्य तक्षशिलां प्रत्यभिप्रतस्थे तं च देशं वशे स्थापयामास।

## २६

### त्रिषष्ठ्यधिकशततमोऽध्यायः

## बकासुरवधः

ततो रात्र्यां व्यतीतायामन्नमादाय पाण्डवः।
भीमसेनो ययौ तत्र यत्रासौ पुरुषादकः॥१॥
आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली।
आजुहाव ततो नाम्ना तदन्नमुपपादयन्॥२॥
ततः स राक्षसः क्रुद्धो भीमस्य वचनात्तदा।
आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः॥३॥

महाकायो महावेगो दारयन्निव मेदिनीम् ।
लोहिताक्षः करालश्च लोहितश्मश्रुमूर्द्धजः ।।४।।
आकर्णाद्भिन्नवक्त्रश्च शङ्कुकर्णो विभीषणः ।
त्रिशिखां भ्रुकुटिं कृत्वा सन्दश्य दशनच्छदम् ।।५।।
भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः ।
विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् ।।६।।
कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितम् ।
पश्यतो मम दुर्बुद्धिर्यियासुर्यमसादनम् ।।७।।
भीमसेनस्तु तच्छ्रुत्वा प्रहसन्निव भारत ।
राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः ।।८।।
रवं स भैरवं कृत्वा समुद्यम्य करावुभौ ।
अभ्यद्रवद् भीमसेनं जिघांसुः पुरुषादकः ।।९।।
तथापि परिभूयैनं प्रेक्षमाणो वृकोदरः ।
राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा ।।१०।।
अमर्षेण तु सम्पूर्णः कुन्तीपुत्रं वृकोदरम् ।
जघान पृष्ठे पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः ।।११।।
तथा बलवता भीमः पाणिभ्यां भृशमाहतः ।
नैवावलोकयामास राक्षसं भुङ्क्त एव सः ।।१२।।
ततः स भूय संक्रुद्धो वृक्षमादाय राक्षसः ।
ताड़यिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली ।।१३।।
ततो भीमः शनैर्भुक्त्वा तदन्नं पुरुषर्षभः ।
वार्य्युपस्पृश्य संहृष्टस्तस्थौ युधि महाबलः ।।१४।।
क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्य्यवान् ।
सव्येन पाणिना भीमः प्रहसन्निव भारत ।।१५।।
ततः स पुनरुद्यम्य वृक्षान् बहुविधान् बली ।
प्राहिणोद् भीमसेनाय तस्मै भीमश्च पाण्डवः ।।१६।।
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
घोररूपं महाराज नरराक्षसराजयोः ।।१७।।
नाम विश्राव्य तु बकः समभिद्रुत्य पाण्डवम् ।
भुजाभ्यां परिजग्राह भीमसेनं महाबलम् ।।१८।।

भीमसेनोऽपि तद्रक्षः परिरम्य महाभुजः।
विस्फुरन्तं महाबाहुं विचकर्ष बलाद्बली ॥१९॥
स कृष्यमाणो भीमेन कर्षमाणश्च पाण्डवम्।
समयुज्यत तीव्रेण क्लमेन पुरुषादकः ॥२०॥
तयोर्वेगेन महता पृथिवी समकम्पत।
पादपांश्च महाकायांश्चूर्णयामासतुस्तदा ॥२१॥
क्षीयमाणं तु तद्रक्षः समीक्ष्य पुरुषादकम्।
निष्पिश्य भूमौ जानुभ्यां समाजघ्ने वृकोदरः ॥२२॥
ततोऽस्य जानुना पृष्ठमवपीड्य बलादिव।
वाहुना परिजग्राह दक्षिणेन शिरोधराम् ॥२३॥
सव्येन च कटीदेशे गृह्य वाससि पाण्डवः।
तद्रक्षो द्विगुणं चक्रे रवन्तं भैरवं रवम् ॥२४॥
ततोऽस्य रुधिरं वक्त्रात् प्रादुरासीद् विशांपते।
भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः ॥२५॥
ततः स भग्नपार्श्वाङ्गो नदित्वा भैरवं रवम्।
शैलराजप्रतीकाशो गतासुरभवद्वकः ॥२६॥

२७

**वनपर्व**

त्रिपञ्चाशत्तमोऽध्यायः

## नलदमयन्तीसंवादः

आसीद्राजा नलो नाम वीरसेनसुतो बली।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥१॥
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा।
उपर्य्युपरि सर्वेषामादित्य इव तेजसा ॥२॥
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥३॥

ईप्सितो वरनारीणामुदारः संयतेन्द्रियः।
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ।।४।।
तथैवासीद् विदर्भेषु भीमो भीमपराक्रमः।
शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ।।५।।
स प्रजार्थे परं यत्नमकरोत् सुसमाहितः।
तमभ्यगच्छद् ब्रह्मर्षिर्दमनो नाम भारत ।।६।।
तं स भीमः प्रजाकामस्तोषयामास धर्मवित्।
महिष्या सह राजेन्द्र सत्कारेण सुबर्चसम् ।।७।।
तस्मै प्रसन्नो दमनः सभार्य्याय वरं ददौ।
कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ।।८।।
दमयन्तीं दमं दान्तं दमनं च सुबर्चसम्।
उपपन्नान् गुणैः सर्वैर्भीमान् भीमपराक्रमान् ।।९।।
दमयन्ती तु रूपेण तेजसा यशसा श्रिया।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ।।१०।।
अथ तां वयसि प्राप्ते दासीनां समलंकृतम्।
शतं शतं सखीनां च पर्य्युपासच्छचीमिव ।।११।।
तत्र स्म राजते भैमी सर्वाभरणभूषिता।
सखीमध्येऽनवद्याङ्गी विद्युत्सौदामिनी यथा ।।१२।।
अतीव रूपसम्पन्ना श्रीरिवायतलोचना।
न देवेषु न यक्षेषु तादृग् रूपवती क्वचित् ।।१३।।
मानुषेष्वपि चान्येषु दृष्टपूर्वाथवा श्रुता।
चित्तप्रसादनी बाला देवानामपि सुन्दरी ।।१४।।
नलश्च नरशार्दूलो लोकेष्वप्रतिमो भुवि।
कन्दर्प इव रूपेण मूर्त्तिमानभवत् स्वयम् ।।१५।।
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात्।
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः ।।१६।।
तयोरदृष्टः कामोऽभूच्छृण्वतोः सततं गुणान्।
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः ।।१७।।
अशक्नुवन् नलः कामं तदा धारयितुं हृदा।
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ।।१८।।

स ददर्श ततो हंसान् जातरूपपरिष्कृतान्।
वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥१९॥
ततोऽन्तरिक्षगो वाचं व्याजहार नलं तदा।
हन्तव्योऽस्मि न ते राजन् करिष्यामि तव प्रियम् ॥२०॥
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥२१॥
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥२२॥
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके।
निपेतुस्ते गरुत्मन्तः सा ददर्श च तान् खगान् ॥२३॥
सा तानद्भुतरूपान् वै दृष्ट्वा सखिगणावृता।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥२४॥
अथ हंसा विससृपुः सर्वतः प्रमदावने।
एकैकशस्तदा कन्यास्तान् हंसान् समुपाद्रवन् ॥२५॥
दमयन्ती तु यं हंसं समुपाधावदन्तिके।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥२६॥
दमयन्ति नलो नाम निषधेषु महीपतिः।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥२७॥
कन्दर्प इव रूपेण मूर्त्तिमानभवत् स्वयम्।
तस्य वै यदि भार्य्या त्वं भवेथा वरवर्णिनि ॥२८॥
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे।
वयं हि देवगन्धर्वमनुष्योरगराक्षसान् ॥२९॥
दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः।
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ॥३०॥
विशिष्टाया विशिष्टेन संगमो गुणवान् भवेत्।
एवमुक्ता तु हंसेन दमयन्ती विशांपते ॥३१॥
अब्रवीत्तत्र तं हंसं त्वमप्येवं नले वद।
तथेत्युक्त्वाण्डजः कन्यां विदर्भस्य विशांपते।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥३२॥

दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत।
ततः प्रभृति न स्वस्था नलं प्रति बभूव सा ॥३३॥
ततश्चिन्तापरा दीना विवर्णवदना कृशा।
बभूव दमयन्ती तु निःश्वासपरमा तदा ॥३४॥
ऊर्द्धदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना।
पाण्डुवर्णा क्षणेनाथ हृच्छयाविष्टचेतना ॥३५॥
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित्।
न नक्तं न दिवा शेते हा हेति रुदती पुनः ॥३६॥
तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः।
ततो विदर्भपतये दमयन्त्याः सखीजनः ॥३७॥
न्यवेदयत्तामस्वस्थां दमयन्तीं नरेश्वरे।
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीं सखीगणात् ॥३८॥
चिन्तयामास तत्कार्य्यं सुमहत् स्वां सुतां प्रति।
किमर्थं दुहिता मेऽद्य नातिस्वस्थेव लक्ष्यते ॥३९॥
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम्।
अपश्यदात्मना कार्य्यं दमयन्त्याः स्वयंवरम् ॥४०॥
स संनिमन्त्रयामास महीपालान् विशांपतिः।
अनुभूयतामयं वीराः स्वयंवर इति प्रभो ॥४१॥
श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम्।
अभिजग्मुस्ततो भीमं राजानो भीमशासनात् ॥४२॥
नलोऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम्।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥४३॥

अष्टपञ्चाशत्तमोऽध्यायः

## धृतराष्ट्रदुर्योधनसंवादः

धृतराष्ट्र उवाच ।

क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः ।
तेन संयुगमेष्यन्ति मन्दा विलपतो मम ॥१॥
दुर्य्योधन, निवर्त्तस्व युद्धाद् भरतसत्तम ।
न हि युद्धं प्रशंसन्ति सर्वावस्थमरिन्दम ॥२॥
अलमर्द्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् ।
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम ॥३॥
एतद्धि कुरवः सर्वे मन्यन्ते धर्मसंहितम् ।
यत्त्वं प्रशान्ति मन्येथाः पाण्डुपुत्रैर्महात्मभिः ॥४॥
अङ्गेमां समवेक्षस्व पुत्र स्वामेव वाहिनीम् ।
जात एष तवाभावस्त्वं तु मोहान्न बुध्यसे ॥५॥
न त्वहं युद्धमिच्छामि नैतदिच्छति बाह्लिकः ।
न च भीष्मो न च द्रोणो नाश्वत्थामा न सञ्जयः ॥६॥
न सोमदत्तो न शल्यो न कृपो युद्धमिच्छति ।
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवास्तथा ॥७॥
येषु संप्रतितिष्ठेयुः कुरवः पीड़िताः परैः ।
ते युद्धं नाभिनन्दन्ति तत्तुभ्यं तात रोचताम् ॥८॥
न त्वं करोषि कामेन कर्णः कारयिता तव ।
दुःशासनश्च पापात्मा शकुनिश्चापि सौबलः ॥९॥

दुर्य्योधन उवाच

नाहं भवति न द्रोणे नाश्वत्थाम्नि न सञ्जये ।
न भीष्मे न च काम्बोजे न कृपे न च बाह्लिके ॥१०॥

सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः।
अन्येषु वा तावकेषु भारं कृत्वा समाह्वये ॥११॥
अहं च तात कर्णश्च रणयज्ञं वितत्य वै।
युधिष्ठिरं पशुं कृत्वा दीक्षितौ भरतर्षभ ॥१२॥
रथो वेदी स्रुवः खड्गो गदा स्रुक् कवचं सदः।
चातुर्होत्रं च धुर्य्या मे शरा दर्भा हविर्यशः ॥१३॥
आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे।
विजित्य स्वयमेष्यावो हतामित्रौ श्रिया वृतौ ॥१४॥
अहं च तात कर्णश्च भ्राता दुःशासनश्च मे।
एते वयं हनिष्यामः पाण्डवान् समरे त्रयः ॥१५॥
अहं हि पाण्डवान् हत्वा प्रशास्ता पृथिवीमिमाम्।
मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमाम् ॥१६॥
त्यक्तं मे जीवितं राज्यं धनं सर्वं च पार्थिव।
न जातु पाण्डवः सार्द्धं वसेयमहमच्युत ॥१७॥
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति ॥१८॥

## धृतराष्ट्र उवाच

सर्वान् वस्तात शोचामि त्यक्तो दुर्य्योधनो मया।
ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् ॥१९॥
महद्वो भयमागामि न चेच्छाम्यथ पाण्डवः।
गदया भीमसेनेन हताः शममुपैष्यथ ॥२०॥
महावनमिव च्छिन्नं यदा द्रक्ष्यसि पातितम्।
बलं कुरूणां भीमेन तदा स्मर्त्तासि मे वचः ॥२१॥

**कर्णपर्व**

**ग्रशीतितमोऽध्यायः**

## दुःशासननिधनम्

भीमोऽपि वेगादवतीर्य्यं यानाद् दुःशासनं वेगवानभ्यधावत्।
ततः स्मृत्वा भीमसेनस्तरस्वी सापत्नकं यत् प्रयुक्तं सुतैस्ते ।।१।।
स्मृत्वाथ केशग्रहणं च देव्या वस्त्रापहारं कृतदुर्बलायाः।
ग्रनागसो भर्तृ पराङ्मुखाया दुःखानि दत्तान्यपि विप्रचिन्त्य ।।२।।
जज्वाल क्रोधादथ भीमसेन ग्राज्यप्रसिक्तो हि यथा हुताशः।
तत्राह कर्णं च सुयोधनं च कृपं द्रौणिं कृतवर्माणमेव ।।३।।
निहन्मि दुःशासनमद्य पापं संरक्ष्यतामद्य समस्तयोधाः।
इत्येवमुक्त्वा सहसाभ्यधावन्निहन्तुकामोऽतिबलस्तरस्वी ।।४।।
तथा तु विक्रम्य रणे वृकोदरो महागजं केशरीवोग्रवेगः।
निगृह्य दुःशासनमेकवीरः सुयोधनस्याधिरथेः समक्षम् ।।५।।
रथादवप्लुत्य गतः स भूमौ यत्नेन तस्मिन् प्रणिधाय चक्षुः।
ग्रसि समुद्यम्य सितं सुधारं कण्ठे पदाक्रम्य च वेपमानम् ।।६।।
उवाच तद् गौरिति यद् ब्रुवाणो हृष्टो वदेः कर्णसुयोधनाभ्याम्।
ये राजसूयावभृथे पवित्रा जाताः कचा याज्ञसेन्या दुरात्मन् ।।७।।
ते पाणिना कतरेणावकृष्टा स्तद् ब्रूहि त्वां पृच्छति भीमसेनः।
श्रुत्वा तु तद् भीमवचः सुघोरं दुःशासनो भीमसेनं निरीक्ष्य ।।८।।
जज्वाल भीमं स तदा स्मयेन संशृण्वतां कौरवसोमकानाम्।
उक्तस्तदाजौ स तथा सरोषं जगाद भीमं परिवर्त्तनेत्रः ।।९।।
ग्रयं करिकराकारः करिकुम्भ-विमर्दनः।
गोसहस्रप्रदाता च क्षत्रियान्तकरः करः ।।१०।।
ग्रनेन याज्ञसेन्या मे भीम केशा विकर्षिताः।
पश्यतां कुरुमुख्यानां युष्माकं च सभासदाम् ।।११।।
एवं ब्रुवन्तं राजसुतं निशम्य ब्रुवन्तमाजौ विनिपीड्य वक्षः।
भीमो बलात्तं प्रतिगृह्य दोर्भ्याम् उच्चैर्ननादाथ समस्तयोधान् ।।१२।।

उवाच यस्यास्ति बलं स रक्षत्वसौ भवेदद्य स निरस्तबाहुः।
दुःशासनं जीवितं प्रोत्सृजन्तमाक्षिप्य योधांस्तरसा महाबलः ॥१३॥
एवं क्रुद्धो भीमसेनः करेण उत्पाटयामास भुजं महात्मा।
दुःशासनं तेन स वीरमध्ये जघान वज्राशनिसन्निभेन ॥१४॥
भीमोऽपि हत्वा तत्रैव दुःशासनममर्षणम्।
पूरयित्वाञ्जलिं भूयो रुधिरस्योग्रनिस्वनः।
शृण्वतां लोकवीराणामिदं वचनमब्रवीत् ॥१५॥
ये तदास्मान् प्रनृत्यन्ति पुनर्गौरिति गौरिति।
तान् वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥१६॥
प्रमाण-कोट्यां शयनं कालकूटस्य भोजनम्।
दंशनं चाहिभिः कृष्णैर्दाहश्च जतुवेश्मनि ॥१७॥
द्यूतेन राज्यहरणमरण्ये वसतिश्च या।
द्रौपद्याः केशपक्षस्य ग्रहणं च सुदारुणम् ॥१८॥
इष्वस्त्राणि च संग्रामेष्वसुखानि च वेश्मनि।
विराटभवने यश्च क्लेशोऽस्माकं पृथग्विधः ॥१९॥
शकुनेर्धार्त्तराष्ट्रस्य राधेयस्य च मन्त्रिते।
अनुभूतानि दुःखानि तेषां हेतुस्त्वमेव हि ॥२०॥
दुःखान्येतानि जानीमो न सुखानि कदाचन।
धृतराष्ट्रस्य दौरात्म्यात् सपुत्रस्य सदा वयम् ॥२१॥
एतावदुक्त्वा वचनं प्रहृष्टो ननाद चोच्चै रुधिरार्द्रगात्रः।
ननर्द चैवातिबलो महात्मा वृत्रं निहत्येव सहस्रनेत्रः ॥२२॥

चतुर्थोऽध्यायः

# ज्ञानकर्मसंन्यासयोगः

श्री भगवानुवाच

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ।।१।।
(अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृति स्वामधिष्ठाय सम्भवाम्यात्ममायया ।।२।।)
(यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।।३।।)
(परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।।४।।)
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ।।५।।
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
वहवो ज्ञानतपसा पूता मद्भावमागताः ।।६।।
(ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।।७।।)
काङ्क्षन्तः कर्मणां सिद्धि यजन्त इह देवताः ।
क्षिप्र हि मानुषे लोके सिद्धिर्भवति कर्मजा ।।८।।
(चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ।।९।।)
(न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ।।१०।।)
एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ।।११।।

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१२॥
(कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१३॥)
कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१४॥
(यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१५॥)
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥१६॥
(निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥१७॥)
(यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥१८॥)
गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥१९॥
श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ! ।
सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ॥२०॥
(तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥२१॥)
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥२२॥
(अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥२३॥)
(यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ! ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥२४॥)
(न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥२५॥)
(श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥२६॥)

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥२७॥
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥२८॥
(तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥२९॥)

## २१

# बुद्ध-चरितम्

### प्रथमः सर्गः

## बुद्धदेव-जन्म-परिग्रहः

आसीद्विशालोन्नतसानुलक्ष्म्या पयोदपंक्त्येव परीतपार्श्वम् ।
उदग्रधिष्ण्यं गगणेऽवगाढं पुरं महर्षेः कपिलस्य वस्तु ॥१॥
महीभृतां मूर्ध्नि कृताभिषेकः शुद्धोदनो नाम नृपोऽर्कबन्धुः ।
अध्याशयो वा स्फुटपुण्डरीकं पुराधिराजं तदलञ्चकार ॥२॥
तस्यातिशोभाविसृतातिशोभा रविप्रभेवास्ततमःप्रभावा ।
समग्रदेवीनिवहाग्रदेवी बभूव मायापगतेव माया ॥३॥
अतीन्द्रियेनात्मनि दुष्कुहोऽयं मया जनो योजयितुं न शक्यः ।
इतीव सूक्ष्मां प्रकृतिं विहाय धर्मेण साक्षाद्विहिताः स्वमूर्त्तिः ॥४॥
च्युतोऽथ कायात्तुषितात् त्रिलोकीमुद्योतयन्नुत्तम-बोधिसत्त्वः ।
विवेश तस्याः स्मृत एव कुक्षौ नन्दागुहायामिव नागराजः ॥५॥
धृत्वा हिमाद्रिधवलं गुरुषड्विषाणं दानाधिवासितमुखं द्विरदस्य रूपम् ।
शुद्धोदनस्य वसुधाधिपतेर्महिष्याः कुक्षिं विवेश स जगद्व्यसनक्षयाय ॥६॥
मायापि तं कुक्षिगतं दधाना विद्युद्विलासं जलदावलीव ।
दानाभिवर्षैः परितो जनानां दारिद्र्यतापं शमयाञ्चकार ॥७॥

सान्तःपुरजना देवी कदाचिदथ लुम्बिनीम् ।
जगामानुमते राज्ञः सम्भूतोत्तमदोहदा ।।८।।
शाखामालम्बमानाया: पुष्पभारावलम्बिनीम् ।
देव्याः कुक्षिं विभिद्याशु बोधिसत्त्वो विनिर्ययौ ।।६।।
तं जातमात्रमथ काञ्चनयूपगौरं प्रीतः सहस्रनयनः शनकैरगृह्णात् ।
मन्दारपुष्पनिकरैः सह तस्य मूर्ध्नि खान्निर्मले च विनिपेततुरम्बुधारे ।।१०।।
स हि स्वगात्रप्रभयोज्ज्वलन्त्या दीपप्रभां भास्करवन्मुमोष ।
महार्हजाम्बुनद-चारुवर्णो विद्योतयामास दिशश्च सर्वाः ।।११।।
अनाकुलान्यब्जसमुद्गतानि निष्पेषवन्त्यायतविक्रमाणि ।
तथैव धीराणि पदाणि सप्त सप्तर्षितारासदृशो जगाम ।।१२।।
बोधाय जातोऽस्मि जगद्धितार्थमन्त्या तथोत्पत्तिरियं ममेति ।
चतुर्दिशं सिंहगतिर्विलोक्य वाणीं च भव्यार्थकरीमुवाच ।।१३।।

## ३२

### तृतीयः सर्गः चतुर्थश्च

## जीर्ण-रुग्न-मृत-प्रव्रजित-दर्शनम्

ततो नृपस्तस्य निशम्य भावं पुत्राभिधानस्य मनोरथस्य ।
स्नेहस्य लक्ष्म्या वयसश्च योग्यामाज्ञापयामास विहारयात्राम् ।।१।।
निवर्तयामास च राजमार्गे सम्पातमार्तस्य पृथग् जनस्य ।
मा भूत् कुमारः सुकुमारचित्तः संविग्नचेता इव मन्यमानः ।।२।।
प्रत्यङ्गहीनान् विकलेन्द्रियांश्च जीर्णातुरादीन् कृपणांश्च भिक्षून् ।
ततः समुत्सार्य परेण साम्ना शोभां परां राजपथस्य चक्रुः ।।३।।
अथो नरेन्द्रः सुतमागताश्रुः शिरस्युपाघ्राय चिरं निरीक्ष्य ।
गच्छेति चाज्ञापयति स्म वाचा स्नेहान्न चैनं मनसा मुमोच ।।४।।
ततः स जाम्बूनदभाण्डभृद्भिर्युक्तं चतुर्भिर्निभृतैस्तुरङ्गैः ।
अक्लीबविद्युच्छुचिरश्मिधारं हिरण्मयं स्यन्दनमारुरोह ।।५।।

ततः प्रकीर्णोज्ज्वलपुष्पजालं विषक्तमाल्यं प्रचलत्पताकम्।
मार्गं प्रपेदे सदृशानुयात्रश्चन्द्रः सनक्षत्र इवान्तरीक्षम् ।।६।।
कीर्णं तथा राजपथं कुमारः पौरैर्विनीतैः शुचिधीरवेषैः।
तत्पूर्वमालोक्य जहर्ष किञ्चिन्मेने पुनर्भावमिवात्मनश्च ।।७।।
पुरं तु तत् स्वर्गमिव प्रहृष्टं शुद्धाधिवासाः समवेक्ष्य देवाः।
जीर्णं नरं निर्ममिरे प्रयातुं सञ्चोदनार्थं क्षितिपात्मजस्य ।।८।।
ततः कुमारो जरयाभिभूतं दृष्ट्वा नरेभ्यः पृथगाकृतिं तम्।
उवाच संग्राहकमागतास्थस्तत्रैव निष्कम्पनिविष्टदृष्टिः ।।९।।
क एष भो सूत नरोऽभ्युपेतः केशैः सितैर्यष्टिविषक्तहस्तः।
भ्रूसंवृताक्षः शिथिलानताङ्गः किं विक्रियैषा प्रकृतिर्यदृच्छा ।।१०।।
इत्येवमुक्तः स रथप्रणेता निवेदयामास नृपात्मजाय।
संरक्ष्यमप्यर्थमदोषदर्शी तैरेव देवैः कृतबुद्धिमोहः ।।११।।
रूपस्य हर्त्री व्यसनं बलस्य शोकस्य योनिर्निधनं रतीनाम्।
नाशः स्मृतीनां रिपुरिन्द्रियाणामेषा जरा नाम ययैष भग्नः ।।१२।।
इत्येवमुक्ते चलितः स किञ्चिद्राजात्मजः सूतमिदं बभाषे।
किमेष दोषो भविता ममापीत्यस्मै ततः सारथिरभ्युवाच ।।१३।।
आयुष्मतोऽप्येष वयःप्रकर्षान्निःसंशयं कालवशेन भावी।
एवं जरां रूपविनाशयित्रीं जानाति चैवेच्छति चैष लोकः ।।१४।।
निःश्वस्य दीर्घं स शिरः प्रकम्प्य तस्मिंश्च जीर्णे विनिवेश्य चक्षुः।
ततः कुमारो भवनं तदेव चिन्तावशः शून्यमिव प्रपेदे ।।१५।।
यदा तु तत्रैव न शर्म लेभे जरा जरेति प्रपरीक्षमाणः।
ततो नरेन्द्रानुमतः स भूयः क्रमेण तेनैव बहिर्जगाम ।।१६।।
अथापरं व्याधिपरीतदेहं त एव देवाः ससृजुर्मनुष्यम्।
दृष्ट्वा च तं सारथिमाबभाषे शौद्धोदनिस्तद्गतदृष्टिरेव ।।१७।।
स्थूलोदरः श्वासचलच्छरीरः स्रस्तांसबाहुः कृशपाण्डुगात्रः।
अम्बेति वाचं करुणं ब्रुवाणः परं समाश्लिष्य नरः क एषः ।।१८।।
ततोऽब्रवीत् सारथिरस्य सौम्य धातुप्रकोपप्रभवः प्रवृद्धः।
रोगाभिधानः सुमहाननर्थः शक्तोऽपि येनैष कृतोऽस्वतन्त्रः ।।१९।।
इत्यूचिवान् राजसुतः स भूयस्तं सानुकम्पो नरमीक्षमाणः।
अस्यैव जातः पृथगेष दोषः सामान्यतो रोगभयं प्रजानाम् ।।२०।।

ततो बभाषे स रथप्रणेता कुमार साधारण एष दोषः।
इति श्रुतार्थः स विषण्णचेताः प्रध्यानयुक्तः प्रविवेश सद्म ।।२१।।
ततो विशेषेण नरेन्द्रमार्गे स्वलङ्कृते चैव परीक्षिते च।
व्यत्यास्य सूतं च रथं च राजा प्रस्थापयामास वहिः कुमारम् ।।२२।।
ततस्तथा गच्छति राजपुत्रे तैरेव देवैर्विहितो गतासुः।
तं चैव मार्गे मृतमुह्यमानं सूतः कुमारश्च ददर्श नान्यः ।।२३।।
अथाब्रवीद्राजसुतः स सूतं नरैश्चतुर्भिर्ह्रियते क एषः।
दीनैर्मनुष्यैरनुगम्यमानो यो भूषितोऽश्वास्यवरुद्यते च ।।२४।।
ततः स शुद्धात्मभिरेव देवैः शुद्धाधिवासैरभिभूतचेताः।
अवाच्यमप्यर्थमिमं नियन्ता प्रव्याजहारार्थविदीश्वराय ।।२५।।
बुद्धीन्द्रियप्राणगुणैर्वियुक्तः सुप्तो विसंज्ञस्तृणकाष्ठभूतः।
संबध्य संरक्ष्य च यत्नवद्भिः प्रियाप्रियैस्त्यज्यत एष कोऽपि ।।२६।।
इति प्रणेतुः स निशम्य वाक्यं सञ्चुक्षुभे किञ्चिदुवाच चैनम्।
किं केवलस्यैव जनस्य धर्मः सर्वप्रजानामयमीदृशोऽन्तः ।।२७।।
ततः प्रणेता वदति स्म तस्मै सर्वप्रजानामयमन्तकर्मा।
हीनस्य मध्यस्य महात्मनो वा सर्वस्य लोके नियतो विनाशः ।।२८।।
ततः स धीरोऽपि नरेन्द्रसुनुः श्रुत्वैव मृत्युं विषसाद सद्यः।
इयञ्च निष्ठा नियतं प्रजानां प्रमाद्यति त्यक्तभयश्च लोकः ।।२९।।
तस्माद्रथं सूत निवर्त्यतां नो विहारभूमौ न हि देशकालः।
जानन् विनाशं कथमार्त्तिकाले सचेतनः स्यादिह हि प्रमत्तः ।।३०।।
इति ब्रुवाणेऽपि नराधिपात्मजे निवर्तयामास स नैव तं रथम्।
विशेषयुक्तं तु नरेन्द्रशासनात् स पद्मखण्डं वनमेव निर्ययौ ।।३१।।
स तथा विषयैर्विलोभ्यमानः परमोहैरपि शाक्यराजसुनुः।
न जगाम रतिं न शर्म लेभे हृदये सिंह इवातिदिग्धविद्धः ।।३२।।
अथ मन्त्रिसुतैः क्षमैः कदाचित् सखिभिश्चित्रकथैः कृतानुयात्रः।
वनभूमिदिदृक्षया शमेप्सुर्नरदेवानुमतो वहिः प्रतस्थे ।।३३।।
अभितारलचारुपर्णवत्या विजने मूलमुपेयिवान् स जम्ब्वाः।
पुरुषैरपरैरदृश्यमानः पुरुषश्चोपससर्प भिक्षुवेशः ।।३४।।
नरदेवसुतस्तमभ्यपृच्छद् वद कोऽसीति शशंस सोऽथ तस्मै।
स च पुङ्गव जन्ममृत्युभीतः श्रमणः प्रव्रजितोऽस्मि मोक्षहेतोः ।।३५।।

जगति क्षयधर्मके मुमुक्षुर्मृगयेऽहं शिवमक्षयं पदं तत् ।
अजनोऽन्यजनैरतुल्यबुद्धिर्विषयेभ्यो विनिवृत्तरागदोषः ।।३६।।
निवसन् क्वचिदेव वृक्षमूले विजने वायतने गिरौ वने वा ।
विचराम्यपरिग्रहो निराशः परमार्थाय यथोपपन्नभिक्षुः ।।३७।।
इति पश्यत एव राजसूनोरिदमुक्त्वा स नभः समुत्पपात ।
स हि तद्वपुरन्यबुद्धिदर्शी स्मृतये तस्य समेयिवान् दिवौकाः ।।३८।।
गगणं खगवद् गते च तस्मिन् नृवरः संजहृषे विसिस्मिये च ।
उपलभ्य ततश्च धर्मसंज्ञामभिनिर्याणविधौ मतिं चकार ।।३९।।
स जरामरणक्षयं चिकीर्षुर्वनवासाय मतिं स्मृतौ निधाय ।
प्रविवेश पुनः पुरं न कामाद्वनभूमेरिव मण्डलं द्विपेन्द्रः ।।४०।।

## ३३

### दशमः सर्ग एकादशश्च

# बिम्बिसार-सिद्धार्थ-संवादः

उत्तीर्य गङ्गां प्रचलत्तरङ्गां राजात्मजो राजगृहं जगाम ।
पञ्चाचलाङ्कं नगरं प्रपेदे शान्तः स्वयम्भूरिव नाकपृष्ठम् ।।१।।
श्रेण्योऽथ भर्ता मगधाजिरस्य वाह्याद् विमानाद् विपुलं जनौघम् ।
ददर्श पप्रच्छ च तस्य हेतुं ततस्तम् अस्मै पुरुषः शशंस ।।२।।
ज्ञानं परं वा पृथिवीश्रियं वा विप्रैर्य उक्तोऽधिगमिष्यतीति ।
स एव शाक्याधिपतेस्तनूजो निरीक्ष्यते प्रव्रजितो जनेन ।।३।।
ततः श्रुतार्थो मनसा गतार्थो राजा बभाषे पुरुषं तमेव ।
विज्ञायतां क्व प्रतिगच्छतीति तथेत्यथैनं पुरुषोऽन्वगच्छत् ।।४।।
आदाय भैक्षं च यथोपपन्नं ययौ गिरेः प्रस्रवणं विविक्तम् ।
तत्रैवम् आलोक्य स राजभृत्यः श्रेण्याय राज्ञे कथयाञ्चकार ।।५।।
संश्रुत्य राजा स च बाहुमान्यात् तत्र प्रतस्थे निभृतानुयात्रः ।
शैलस्य तस्योपरि शृङ्गभूतं शान्तेन्द्रियं पश्यति बोधिसत्त्वम् ।।६।।
ततः शुचौ वारणकर्णनीले शिलातलेऽसौ निषसाद राजा ।
नृपोपविश्यानुमतश्च तस्य भावं विजिज्ञासुरिदं बभाषे ।।७।।

आदित्यपुर्वं विपुलं कुलं ते नवं वयो दीप्तमिदं वपुश्च ।
कस्माद् इयं ते मतिरक्रमेण भैक्षाक एवाभिरता न राज्ये ।।८।।
गात्रं हि ते लोहितचन्दनार्हं काषायसंश्लेषमनर्हमेतत् ।
हस्तः प्रजापालनयोग्य एष भोक्तुम् न चार्हः परदत्तमन्नम् ।।९।।
स्नेहेन खल्वेतद् अहं ब्रवीमि नैश्वर्यरागेण न विस्मयेन ।
इमं हि दृष्ट्वा तव भिक्षुवेशं जातानुकम्पोऽस्म्यपि चागताश्रुः ।।१०।।
अथैवम् उक्तो मगधाधिपेन सुहृन्मुखेन प्रतिकुलम् अर्थम् ।
स्वस्थोऽविकारः कुलशौचशुद्धः शौद्धदनिर्वाक्यम् इदं जगाद ।।११।।
नाश्चर्यम् एतद् भवतोऽभिधातुं जातस्य हर्यङ्क-कुले विशाले ।
यन्मित्रपक्षे तव मित्रकाम स्याद् वृद्धिरेषा परिशुद्धवृत्तेः ।।१२।।

अहं जरामृत्युभयं विदित्वा
मुमुक्षया धर्ममिमं प्रपन्नः ।
बन्धून् प्रियान् अश्रुमुखान् विहाय
प्रागेव कामान् अशुभस्य हेतून् ।।१३।।

नाशीविषेभ्योऽपि तथा बिभेमि नैवाशनिभ्यो गगनाच्च्युतेभ्यः ।
न पावकेभ्योऽनिलसंहितेभ्यो यथा भयं मे विषयेभ्य एभ्यः ।।१४।।
समुद्रवस्त्राम् अपि गाम् अवाप्य पारं जिगीषन्ति महार्णवस्य ।
लोकस्य कामैर्न वितृप्तिरस्ति पतद्भिरम्भोभिरिवार्णवस्य ।।१५।।

देवेन वृष्टेऽपि हिरण्यवर्षे
द्वीपान् समुद्रांश्चतुरोऽपि जित्वा ।
शक्रस्य चार्द्धासनम् अप्यवाप्य
मान्धातुरासीद् विषयेष्वतृप्तिः ।।१६।।

भुक्तापि राज्यं दिवि देवतानां शतक्रतौ वृत्रभयात् प्रनष्टे ।
दर्पाद् महर्षीन् अपि वाहयित्वा कामेष्वतृप्तो नहुषः पपात ।।१७।।
ऐलश्च राजा त्रिदिवं विगाह्य नीत्वापि देवीं वशम् उर्वशीं ताम् ।
लोभाद् ऋषिभ्यः कनकं जिहीर्षुर्जगाम नाशं विषयेष्वतृप्तः ।।१८।।
गीतैर्ह्रियन्ते हि मृगा बधाय रूपार्थमग्नौ शलभाः पतन्ति ।
मत्स्यो गिरत्यायसम् आमिषार्थी तस्मादनर्थं विषयाः फलन्ति ।।१९।।
दुःखप्रतीकारनिमित्तभूतास्तस्मात् प्रजानां विषया न भोग्याः ।
अश्नामि भोगान् इति कोऽभ्युपेयात् प्राज्ञः प्रतिकारविधौ प्रवृत्तान् ।।२०।।

यः पित्तदाहेन विदह्यमानः शीतक्रियां भोग इति व्यवस्येत् ।
दुःखप्रतीकारविधौ प्रवृत्तः कामेषु कुर्यात् स हि भोगसंज्ञाम् ॥२१॥
कामेष्वनैकान्तिकता च यस्माद् अतोऽपि मे तेषु न भोगसंज्ञा ।
ये एव भावा हि सुखं दिशन्ति ते एव दुःखं पुनरावहन्ति ॥२२॥
दृष्ट्वा तु मिश्रां सुखदुःखतां मे राज्यं च दास्यं च मतं समानम् ।
नित्यं हसत्येव हि नैव राजा न चापि सन्तप्यते एव दासः ॥२३॥
राज्येऽपि वासो युगम् एकम् एव क्षुत्सन्निरोधाय तथान्नमात्रा ।
शय्या तथैकासनम् एकम् एव शेषा विशेषा नृपतेर्मदाय ॥२४॥
यो दन्दशुकं कुपितं भुजङ्गं मुक्त्वा व्यवस्येद् हि पुनर्ग्रहीतुम् ।
दाहात्मिकां वा ज्वलितां तृणोल्कां संत्यज्य कामान् स पुनर्भजेत ॥२५॥
जरायुधो व्याधिविकीर्णसायको यदान्तको व्याध इवाश्रितः स्थितः ।
प्रजामृगान् भाग्यवनाश्रितान्स्तुदन् वयःप्रकर्षं प्रति को मनोरथः ॥२६॥
इहागतश्चाहमितो दिदृक्षया मुनेरराडस्य विमोक्षवादिनः ।
प्रयामि चाद्यैव नृपास्तु ते शिवं वचः क्षमेथाः शमतत्त्वनिष्ठुरम् ॥२७॥

३४

## शकराजरुद्रदाम्नः जुनागडस्थशिलालेखः

इदं तडाकं सुदर्शनं सेतुबन्धेनोपपन्नं सुप्रतिविहितप्रणालीपरीवाहमीढ़विधानं वर्त्तते । तदिदं राज्ञो महाक्षत्रपस्य सुगृहीतनाम्नः स्वामिचष्टनस्य पौत्रस्य राज्ञः क्षत्रपस्य सुगृहीतनाम्नः स्वामिजयदाम्नः पुत्रस्य राज्ञो महाक्षत्रपस्य गुरुभिरभ्यस्तनाम्नो रुद्रदाम्नो वर्षे द्विसप्ततितमे (७०+२) सृष्टवृष्टिना पर्जन्येन एकार्णवभूतायामिव पृथिव्यां कृतायां गिरेरुर्जयतः सुवर्णसिकतापलाशिनीप्रभृतीनां नदीनाम् अतिमात्रोद्वृत्तैर्वेगैः युगनिधनसदृशपरमघोरवेगेन वायुना प्रमथितसलिलविक्षिप्तजर्जरीकृताव-दीर्णक्षिप्ताश्मवृक्षगुल्मलताप्रतानम् आनदीतलादित्युद्घाटितमासीत् । चत्वारि हस्तशतानि विंशत्युत्तराण्यायतेन एतावन्त्येव विस्तीर्णेन पञ्चसप्ततिहस्तावगाढेन भेदेन निःसृतसर्वतोयं मरुधन्वकल्पमतिभृशमासीत्* ।

* कल्पमतिभृशं दुर्दर्शनमासीत् इति पाठश्च ।

इदं मौर्य्यस्य राज्ञः चन्द्रगुप्तस्य राष्ट्रियेन वैश्येन पुष्यगुप्तेन कारितम् अशोकस्य मौर्य्यस्य कृते यवनराजेन तुषास्फेनाधिष्ठाय प्रणालीभिरलङ्कृतम्। सर्ववर्णैरभिगम्य रक्षणार्थं पतित्वे वृतेन स्ववीर्य्यार्जितानाम् अनुरक्तसर्वप्रकृतीनां पूर्वापराकरावन्त्यनूपनीवृदानर्त्तसुराष्ट्रश्वभ्रमरुकच्छसिन्धुसौवीरकुकुरापरान्तनिषादादीनां समग्राणां विषयानां पतिना यौधेयानां प्रसह्योत्सादकेन दक्षिणापथपतेः सातकर्णेर्द्विरपि निर्व्याजमवजित्य अवजित्य सम्बन्धाविदूरतया अनुत्सादनात् प्राप्तयशसा शब्दार्थगान्धर्वन्यायाद्यानां विद्यानां महतीनां पारणधारणविज्ञानप्रयोगावाप्तविपुलकीर्त्तिना उदारालङ्कृतगद्यपद्यकाव्यविधानप्रवीणेन स्वयमधिगतमहाक्षत्रपनाम्ना नरेन्द्रकन्यास्वयम्बरानेकमाल्यप्राप्तदाम्ना महाक्षत्रपेण रुद्रदाम्ना धर्मकीर्त्तिवृद्ध्यर्थम् अपीडयित्वा करविष्टिप्रणयक्रियाभिः पौरजानपदं जनं स्वस्मात् कोशान् महता धनौघेन अनतिमहता कालेन त्रिगुणदृढतरविस्तारायामं सेतुं विधाय सुदर्शनतरमिदं कारितम्।

३५

# अवदानशतकम्

(५४)

## श्रीमती

बुद्धो भगवान् राजगृहमुपनिश्रित्य विहरति वेणुवने कलकन्दकनिवापे। राजगृहे नगरे राजा बिम्बिसारो राज्यमेकपुत्रकमिव पालयति। यदा राज्ञा बिम्बिसारेण भगवतः सकाशात् सत्यानि दृष्टानि तदा प्रत्यहं भगवन्तमुपसंक्रामति सार्द्धम् अन्तःपुरेण। अथ संप्राप्ते वसन्तकालसमये अन्तःपुरिकाभी राजा विज्ञप्तः—देव! वयं न शक्नुमोऽहन्यहनि भगवन्तम् उपसंक्रमितुम्, तत् साधु देवोऽस्मिन्नन्तःपुरे तथागतस्य केशनखस्तूपं प्रतिष्ठापयेद् यत्र वयमसकृत् पुष्पैर्गन्धैर्माल्यैर्विलेपनैश्छत्रैर्ध्वजैः पताकाभिः पूजां कुर्य्यामेति। राज्ञा बिम्बिसारेण भगवान् विज्ञप्तः—दीयतामस्मभ्यं केशनखं येन वयं तथागतस्तूपम् अन्तःपुरमध्ये प्रतिष्ठापयाम इति।

भगवता केशनखं दत्तम्। राज्ञा विम्बिसारेण महता सत्कारेण अन्तः-पुरसहायेन तथागतस्य केशनखस्तूपोऽन्तःपुरमध्ये प्रतिष्ठापितः। तत्र चान्तःपुरे अन्तःपुरिका दीपधूपपुष्पगन्धमाल्यविलेपनैरभ्यर्चनं कुर्वन्ति।

यदा पुना राज्ञा अजातशत्रुणा पिता धार्मिको धर्मराजो जीविताद् व्यवरोपितः स्वयं च राज्यं प्रतिपन्नः, तदा भगवच्छासने सर्वदेयधर्माः समुच्छिन्नाः। क्रियाकारश्च कारितो न केनचित् तथागतस्तूपे काराः कर्त्तव्या इति। तदा तत्र केशनखस्तूपे न कश्चित् संमार्जनं दीपधूपपुष्प-दानं वा कुरुते। ततोऽन्तःपुरिकाः केशनखस्तूपं तथाविधं राजानं च विम्बिसारम् अनुस्मृत्य करुणकरुणं रोदितुमारब्धाः हा कष्टं धर्मराज-वियोगाद् वयं पुण्यात् प्रहीणा इति। तत्र च श्रीमती नामान्तःपुरिका। सा स्वकं जीवितमगणयित्वा बुद्धगुणांश्च अनुस्मृत्य केशनखस्तूपं संमृज्य दीपमालामकार्षीत्। यावदजातशत्रुः उपरिप्रासादतलगतस्तमुदारमवभासं दृष्ट्वा पप्रच्छ किमिदमिति। यावदन्यया कथितम्—श्रीमत्या केशनख-स्तूपे दीपमाला कृतेति। ततः श्रीमतीमाहूय कथयति—किमर्थं राज-शासनमतिक्रमसीति। सा कथयति—यद्यपि मया तव शासनमतिक्रान्तम्, किन्तु धर्मराजस्य मया विम्बिसारस्य शासनं नातिक्रान्तमिति। ततस्तेन कुपितेन चक्रं क्षिप्त्वा जीवितात् सा व्यवरोपिता।

३६

# श्रेष्ठभिक्षा

(५५)

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्यारामे। एकदा अनाथपिण्डदस्य बुद्धिरभवत्—किमत्राश्चर्य्यं यदहं दानानि ददामि, पुण्यानि वा करोमि। यन्वहं दरिद्रजनानुग्रहार्थं श्रावस्तीनिवासिनो जनकायाच्छन्दकभिक्षणं कृत्वा भगवन्तं संश्रावकसङ्घमुपतिष्ठेयम्। एवं मे महाजनानुग्रहः कृतो भविष्यति, बहु चानेन पुण्यं प्रसूतं भविष्यतीति।

ततोऽनाथपिण्डदेन गृहपतिना एष वृत्तान्तो राज्ञे निवेदितः। राज्ञा सर्वस्यां श्रावस्त्यां घण्टावघोषणं कारितम्—शृन्वन्तु भवन्तः श्रावस्ती-निवासिनः पौराः। अद्य सप्तमे दिवसेऽनाथपिण्डदो गृहपतिर्हस्तिस्कन्धा-भिरूढस्तथागतस्य संश्रावकसङ्घस्यार्थाय च्छन्दकभिक्षणं कर्त्तुकामः। यस्य वो यन्मात्रं परित्यक्तं तदनुप्रदातव्यमिति। यावत् सप्तमे दिवसे अनाथपिण्डदो गृहपतिर्हस्तिस्कन्धाधिरूढस्तथागतस्य संश्रावकस्यार्थाय छन्दकभिक्षणं कर्त्तुं प्रवृत्तः। तत्र येषां यन्मात्रो विभवस्ते तन्मात्रं दातुं प्रवृत्ताः। केचिद् हारं प्रयच्छन्ति, केचित् कटकं, केचित् केयूरं, केचित् जातरूपमालां, केचिदङ्गुलिमुद्रां, केचिन्मुक्ताहारं, केचिद् हिरण्यं, केचि-दन्तशः कार्षापणम्। गृहपतिरपि परानुग्रहार्थं प्रतिगृह्णाति।

यावदन्यतमा स्त्री परमदरिद्रा। तया त्रिभिर्मासैः कृच्छ्रेण पटक उपार्जितः। सा तं पटकं प्रावृत्य वीथीमवतीर्णा। अनाथपिण्डदश्च तया दूरत एवागच्छन् शङ्खपटहैर्वाद्यमानैरवलोकितः। तयान्यतम उपासकः पृष्टः—यदि तावदयं गृहपतिराढ्यो महाधनो महाभोगः कस्मादयं परकुलेभ्यो भैक्ष्यमटतीति। सा उपासकेनोक्ता—परानुग्रहार्थम्। येऽ-समर्था भगवन्तं संश्रावकसङ्घं भोजयितुं तेषामर्थेऽनुग्रहं करोति। कथं बहवः समेता भगवन्तं प्रतिपादयेयुरिति। ततस्तस्या दारिकाया बुद्धि-रुत्पन्ना—अहं तावदकृतपुण्या, न मे शक्तिरस्ति यदहमेकाकिनी भगवन्तं संश्रावकसङ्घं भोजनेन प्रतिपादयेयम्। यन्वहमत्र किञ्चिदनुप्रदद्यामिति। सा स्वकं विभवम् अवलोकयन्ती न किञ्चित् पश्यति ऋते पटकात्। सा चिन्तयितुं प्रवृत्ता—यद्यहमिहस्थैव पटकं प्रदास्यामि, नग्ना भविष्यामि। यन्वहं शरणपृष्ठमभिरुह्य पटकं क्षिपेयमिति। ततः सा शरणपृष्ठ-मभिरुह्य स्वशरीरात् पटकमवनीय अनाथपिण्डदस्योपरि क्षिप्तवती। सा गृहपतिना संलक्षिता—नूनमस्या एष एव बिभवो यदनया शरणसंस्थया क्षिप्तमिति, तेन स्वपौरुषेयाणाम् आज्ञानुप्रदत्ता—गच्छन्तु भवन्तः, अवलोकयन्तु केनायं पटकः क्षिप्त इति। तैरवलोकिता यावदुत्कुट्का निषण्णा। ततस्तैः पृष्टा। तया चोक्तम्—यो मे विभव आसीत् स मे भगवद्गुणानुकीर्त्तनं प्रतिश्रुत्य दारिद्र्यभयभीतया तथागतप्रमुखे भिक्षु-सङ्घे दत्तः इति। ततस्तैरनाथपिण्डदाय निवेदितम्। ततोऽनाथपिण्डदेन गृहपतिना परमविस्मयजातेन सा दारिका विचित्रैर्वस्त्राभरणैराच्छादिता।

# कुणालसुन्दरकथा

## (१००)

वर्षशतपरिनिर्वृते बुद्धे भगवति पाटलिपुत्रे नगरे राजा अशोको राज्यं करोति ऋद्धं च स्फीतं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहिषी[illegible]पन्नम्। धार्मिको धर्मराजो धर्मेण राज्यं पालयति। यावदपरेण समयेन देव्या सार्द्धं क्रीड़ति परिचारयति च। कालान्तरेण देवी आपन्नसत्त्वा संवृत्ता। दारको जातोऽभिरूपो दर्शनीयः कुणालसदृशाभ्यां नेत्राभ्याम्। तस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति। ज्ञातय ऊचुः—यस्मादस्य जातमात्रस्य कुणालसदृशे नेत्रे, तस्माद् भवतु दारकस्य कुणाल इति नामेति। कुणालो दारक आशु वर्द्धते ह्रदस्थमिव पङ्कजम्। ततस्तं सर्वालङ्कारविभूषितं राजा उत्सङ्गेन कृत्वा पुनः पुनः प्रेक्ष्य रूपसम्पदा प्रहर्षित उवाच—असदृशो मे पुत्रो लोके रूपेणेति।

तत्र च समये गान्धारे पुष्पभेरोत्सो नाम ग्रामः। तत्रान्यतमस्य गृहपतेः पुत्रो जातोऽतिक्रान्तो मानुषं वर्णम्। जन्मनि चास्य दिव्यगन्धोदकपरिपूर्णा रत्नमयी पुष्करिणी प्रादुर्भूता, पुष्पसम्पन्नं च महदुद्यानं जङ्गमं च। यत्र यत्र कुमारो गच्छति तत्र तत्र च पुष्करिणी उद्यानं च प्रादुर्भवति। तस्य सुन्दर इति नामधेयं व्यवस्थापितम्।

ततोऽपरेण समयेन पुष्पभेरोत्साद् वणिजः केनचिदेव करणीयेन पाटलिपुत्रं गताः। ते प्राभृतमादाय राज्ञः सकाशम् उपगताः। ततो राजा अशोकस्तेषां कुणालं दर्शयति—भो वणिजः, कदाचित् कुत्रचिद् भवद्भिः पर्य्यटद्भिरेवंविधं रूपविशेषयुक्तं दृष्टपूर्वमिति। ततस्ते वणिजः कृतकरपुटाः पादयोर्निपत्य अभयं मार्गयित्वा राजानमूचुः—अस्ति देव! अस्मदीये विषये सुन्दरो नाम अतिक्रान्तो मानुषं वर्णम्। जन्मनि चास्य दिव्यगन्धोदकपरिपूर्णा रत्नमयी पुष्करिणी प्रादुर्भूता पुष्पफलसमृद्धं च महदुद्यानं जङ्गमम्। यत्र यत्र च कुमारो गच्छति, तत्र तत्र पुष्करिणी उद्यानं च प्रादुर्भवतीति। श्रुत्वा राजा अशोकः परं विस्मयमापन्नः।

कुतूहलजातश्च दूतसंप्रेषणं कृतवान्—एष राजा अशोक आगन्तुमिच्छति सुन्दरस्य कुमारस्य दर्शनहेतोः। यद्व कृत्यं वा करणीयं वा तत्कुरूध्वम् इति। ततो महाजनकायो भीताः—यदि राजा महासाधनेन इहागमिष्यति कञ्चिदनर्थमुत्पादयिष्यतीति। ततः स कुमारो भद्रयानं योजयित्वा शत-सहस्रं च मुक्ताहारं प्राभृतस्यार्थे दत्त्वा अशोकस्य सकाशं प्रेषितः। राजा अशोकश्च सुन्दरस्य कुमारस्य रूपं शोभां वर्णपुष्कलतां च दिव्यां पुष्करिणीम् उद्यानं च दृष्टवा परं विस्मयमुपगतः।

३८

## पञ्चरात्रम्

भासरचितम्

### धार्त्तराष्ट्रपराजयः

द्वितीयोऽङ्कः

(ततः प्रविशति भटः)

भटः—भो भो निवेद्यतां निवेद्यतां महाराजाय विराटेश्वराय एता हि दस्युकर्मप्रच्छन्नविक्रमैर्धार्तराष्ट्रैर्ह्रियन्ते गावः।

(प्रविश्य काञ्चुकीयः)

काञ्चुकीयः—सदृशमेतद् भ्रातृजनेष्वपि द्रोहिणाम्। जन्मनक्षत्रक्रिया-व्यापृतस्य महाराजस्य तावदकालनिवेदनं मन्युमुत्पादयति। तस्मात् पुण्याहावसाने निवेदयिष्ये।

भटः—आर्य्य! अतिपातिकार्यमिदं, शीघ्रं निवेद्यताम्।

काञ्चुकीयः—इदं निवेद्यते।

(ततः प्रविशति राजा)

राजा—भोः ! किन्नु खलु दुर्य्योधनस्य मामन्तरेण वैरम्। आ ! यज्ञमनुभवितुमनागत इति। कथमनुभवामि। कीचकानां विनाशेन वयमुन्नीतसन्तापाः संवृत्ताः। अथवा परोक्षमपि पाण्डवानां स्निग्ध इति सर्वथा योद्धव्यम्। (भटं प्रति) सूतस्तावदाहूयताम्।

भटः—यदाज्ञापयति महाराजः (निष्क्रान्तः)

सूतः—(प्रविश्य) जयत्वायुष्मान्।

राजा—रथमानय शीघ्रं मे श्लाघ्यः प्राप्तो रणातिथिः।
तोषयिष्ये शरैर्भीष्मं जेष्यामीत्यमनोरथः॥

सूतः—यदाज्ञापयत्यायुष्मान्। आयुष्मन् !
यस्ते परिचितो रथस्तमास्थायोत्तरो गतः।

राजा—त्वमिदानीं कुमारस्य किं न वाहितवान् रथम् ?

सूतः—प्रसीदत्वायुष्मान्। रथं कल्पयित्वा तु सूतसमुदाचारेणोपस्थितः खल्वहम्। कुमारेण मामतिक्रम्य सारथ्ये विनियुक्ता बृहन्नला।

भटः—(प्रविश्य) भग्नः खलु कुमारस्य रथः।

राजा—कथं भग्नो नाम ?

भटः—श्रोतुमर्हति महाराजः।

बहुभिः समराभिज्ञैराच्छिन्नोऽश्वपथः परैः।
भग्नो वाहनलोभेन श्मशानाभिमुखो रथः॥

राजा—आ अस्त्येतत् ? गच्छ भूयो ज्ञायतां वृत्तान्तः।

भटः—(प्रविश्य) जयतु महाराजः। श्मशानान्मुहुर्त्तविश्रान्ततुरगेण कुमारेण तु शरैश्च्छन्ना मार्गाः।

राजा—गच्छ भूयो ज्ञायतां वृत्तान्तः।

भटः—यदाज्ञापयति महाराजः। (निष्क्रम्य प्रविश्य) जयतु महाराजः। जयतु विराटेश्वरः। प्रियं निवेदये महाराजाय। अवर्जितं गोग्रहणम्। अपयाता धार्त्तराष्ट्राः।

३९

# अभिषेकनाटकम्

भासरचितम्

षष्ठोऽङ्कः

## सीताया अग्निशुद्धिः

(प्रविशति बिभीषणो रामश्च)

बिभीषणः—जयतु देवः।

एषा हि राजंस्तव धर्मपत्नी तद्वाहुवीर्य्येण विधूतदुःखा।
लक्ष्मीः पुरा दैत्यकुलच्युतेव तव प्रसादात् समुपस्थिता सा ॥

रामः—बिभीषण! तत्रैव तावत् तिष्ठतु रजनीचरावमर्शजातकल्मषा इक्ष्वाकुकुलस्याङ्कभूता।

बिभीषणः—प्रसीदतु देवः।

रामः—नार्हति भवान् अतःपरं पीडयितुम्।

लक्ष्मणः—(प्रविश्य) जयत्वार्य्यः। आर्य्यस्याभिप्रायं श्रुत्वैव अग्निप्रवेशाय प्रसादं प्रतिपालयत्यार्य्या।

रामः—लक्ष्मण! अस्याः पतिव्रतायाश्छन्दमनुतिष्ठ।

लक्ष्मणः—यदाज्ञापयत्यार्य्यः। (निष्क्रान्तः पुनः प्रविश्य) प्रसीदत्वार्य्यः। आर्य्य! आश्चर्य्यमाश्चर्य्यम्। आर्य्या पुरस्कृत्येत एवाभिवर्त्तते भगवान् विभावसुः।

(ततः प्रविशति अग्निः सीतां गृहीत्वा)

अग्निः—एष भगवान् नारायणः। जयतु देवः।

इमां गृह्णीष्व राजेन्द्र! सर्वलोकनमस्कृताम्।
अपापामक्षतां शुद्धां जानकीं पुरुषोत्तम! ॥

अपि च—

इमां भगवतीं लक्ष्मीं जानीहि जनकात्मजाम्।
सा भवन्तमनुप्राप्ता मानुषीं तनुमास्थिता ॥

रामः—अनुगृहीतोऽस्मि।

जानतापि च वैदेह्याः शुचितां धूमकेतन ! ।
प्रत्ययार्थं हि लोकानामेवमेव मया कृतम् ।।

४०

# बालचरितम्

भासरचितम्

चतुर्थोऽङ्कः

## कालिय-दमनम्

(ततः प्रविशति दामोदरः कालियश्च सपरिजनः)

दामोदरः—सर्वप्रजाहितार्थं द्रुततरं कालियनागं वशं करोमि। (कालियह्रदं प्रविष्टः पुनः कालियं गृहीत्वा प्रविशति)

निर्भर्त्स्य कालियमहं परिविस्फुरन्तं
मूर्द्धाङ्कितैकचरणश्चलबाहुकेतुः ।
भोगे विषोल्बणफणस्य महोरगस्य
हल्लीसकं सललितं रुचिरं वहामि ।।

कालियः—आः ! त्वां त्रिदशाधिवासमधुना सम्प्रेषयामि क्षणात् ।

दामोदरः—यदि ते शक्तिरस्ति, दह्यतां ममैको भुजः, कालिय ! ।

कालियः—ह ह ह !

चतुःसागरपर्य्यन्तां ससप्तकुलपर्वताम् ।
दहेयं पृथिवीं कृत्स्नां किं भुजं न दहामि ते ।।

तिष्ठेदानीम्। एष त्वां भस्मीकरोमि। (विषाग्निं मुञ्चति)

दामोदरः—हन्त दर्शितं ते वीर्य्यम्।

कालियः—प्रसीदतु प्रसीदतु भगवान् नारायणः।

दामोदरः—अनेन वीर्य्येण भवान् गर्वितः।

कालियः—प्रसीदतु भगवान्। अज्ञानादतिक्रान्तवान्। सान्तःपुरः शरणागतोऽस्मि।

दामोदरः—कालिय ! किमर्थमिदानीं यमुनाह्लदं प्रविष्टोऽसि !
कालियः—भगवतो वरवाहनाद् गरुडाद् भीतोऽहमिह प्रविष्टोऽस्मि। तदिच्छामि गरुडादभयं भगवत्प्रसादात्।
दामोदरः—भवतु भवतु।

ममपादेन नागेन्द्र ! चिन्हितं तवमूर्द्धनि।
सुपर्ण एव दृष्ट्वेदमभयं ते प्रदास्यति ।।

कालियः—अनुगृहीतोऽस्मि।
दामोदरः—अद्यप्रभृति गोब्राह्मणपुरोगासु सर्वप्रजास्वप्रमादः कर्तव्यः।
कालियः—भगवन् मद्विषदूषितमिदं जलम्। तदिदानीमेव विषं संहृत्य यमुनाह्लदान्निष्क्रामामि।
दामोदरः—प्रतिनिवर्त्ततां भवान्।
कालियः—यदाज्ञापयति भगवान् नारायणः।

(सपरिजनो निष्क्रान्तः)

४१

# पञ्चतन्त्रम्

## वणिक्पुत्रतुलादण्डबालकानां कथा

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः। स च विभवक्षयात् देशान्तरगमनमना व्यचिन्तयत्—

यत्र देशेऽथवा स्थाने भोगान् भुक्त्वा स्ववीर्य्यतः।
तस्मिन् विभवहीनो यो वसेत् स पुरुषाधमः।।

तस्य च गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुला आसीत्। ताञ्च कस्यचित् श्रेष्ठिनो गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः। ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनमुवाच, भोः श्रेष्ठिन् ! दीयतां सा मे निक्षेपतुला। स आह, 'भोः ! नास्ति सा, त्वदीया तुला मूषिकैर्भक्षिता।' जीर्णधन आह, 'भोः श्रेष्ठिन् !

नास्ति दोषस्ते, यदि सा मूषिकैर्भक्षितेति। ईदृक् एवायं संसारः, न किञ्चिदत्र शाश्वतमस्ति; परमहं नद्यां स्नानार्थं गमिष्यामि, तत् त्वमात्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरणहस्तं प्रेषय इति। सोऽपि चौर्य्यभयात् तस्य शङ्कितः स्वपुत्रमुवाच, 'वत्स ! पितृव्योऽयं तव, स्नानार्थं नद्यां यास्यति, तत् गम्यतामनेन सार्द्धं स्नानोपकरणमादाय इति। अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमनाः तेन अभ्यागतेन सह प्रस्थितः। तथा अनुष्ठिते स वणिक् स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलया आच्छाद्य सत्वरं गृहमागतः। पृष्टश्च तेन वणिजा, 'भोः अभ्यागत ! कथ्यतां कुत्र मे शिशुः, यः त्वया सह नदीं गतः ?' इति। स आह, 'नदीतटात् स श्येनेन हृतः' इति। श्रेष्ठी आह, 'मिथ्यावादिन् ! किं क्वचित् श्येनो बालं हर्त्तुं शक्नोति ? तत् समर्पय मे सुतम्, अन्यथा राजकुले निवेदयिष्यामी'ति। स आह, 'भोः सत्यवादिन् ! यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति; तदर्पय मे तुलां, यदि दारकेण प्रयोजनम्।' एवं तौ विवदमानौ द्वौ अपि राजकुलं गतौ। तत्र श्रेष्ठी तारस्वरेण प्रोवाच, 'भोः ! अब्रह्मण्यम् ! अब्रह्मण्यम्। मम शिशुः अनेन चोरेण अपहृतः।' अथ धर्माधिकारिणस्तम् ऊचुः, 'भोः ! समर्प्यतां श्रेष्ठिसुतः।' स आह, 'किं करोमि, पश्यतो मे नदीतटात् श्येनेन अपहृतः शिशुः।' तच्छ्रुत्वा ते प्रोचुः, 'भोः ! न सत्यमभिहितं भवता, किं श्येनः शिशुं हर्त्तुं समर्थो भवति ?' स आह, भोः भोः ? श्रूयतां मद्वचः—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजन् तत्र हरेच्छ्येनो बालकं नात्र संशयः॥

ते प्रोचुः, 'कथमेतत् ?' ततः श्रेष्ठी सभ्यानाम् अग्रे आदितः सर्वं वृत्तान्तं निवेदयामास। ततः तैर्विहस्य द्वौ अपि तौ परस्परं सम्बोध्य तुलाशिशुप्रदानेन सन्तोषितौ।

# नरपतियुधिष्ठिराख्यकुलालकथा

कस्मिंश्चिदधिष्ठाने कश्चित् कुम्भकारः प्रतिवसति स्म। स कदाचित् प्रमादात् अर्द्धभग्नघटकर्परतीक्ष्णाग्रस्य उपरि महता वेगेन धावन् पतितः। ततः कर्परकोट्या पाटितललाटो रुधिरप्लावितनुः कृच्छ्रादुत्थाय स्वाश्रयं गतः। ततश्च अपथ्यसेवनात् स प्रहारस्तस्य करालतां गतः। कृच्छ्रेण स नीरोगतां नीतः। अथ कदाचित् दुर्भिक्षपीडिते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चित् राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको बभूव। स च राजा तस्य ललाटे विकरालं प्रहारक्षतं दृष्ट्वा चिन्तयामास यत् 'वीरपुरुषः कश्चिदयं नूनं तेन ललाटपट्टे सम्मुखप्रहारः।' अतस्तं सम्मानादिभिः सर्वेषां राजपुरुषाणां मध्ये विशेषप्रसादेन पश्यति स्म। तेऽपि राजपुत्रास्तस्य तं प्रसादातिरेकं पश्यन्तः परम् ईर्ष्याधर्मं वहन्तो राजभयात् न किञ्चिदूचुः।

अथ अन्यस्मिन् अहनि तेन भूपतिना वीरसम्भावनायां क्रियमानायां, विग्रहे समुपस्थिते, प्रकल्प्यमानेषु गजेषु, सन्नह्यमानेषु वाजिषु, योधेषु प्रगुणीक्रियमानेषु, तेन भूभुजा स कुम्भकारः प्रस्तावानुगतं पृष्टो निर्जने, 'भो राजपुत्र! किं ते नाम! का च जातिः? कस्मिन् संग्रामे प्रहारोऽयं ते ललाटे लग्नः?' इति। स आह, 'देव! नायं शस्त्रप्रहारः। युधिष्ठिराभिधः कुलालोऽहम्। प्रकृत्या मद्गेहे अनेककर्परा आसन्। अथ कदाचित् मद्यपानं कृत्वा निर्गतः प्रधावन् कर्परोपरि पतितः। तस्य प्रहारविकारोऽयं मे ललाटे एवं विकरालतां गतः'। तदाकर्ण्य राजा सव्रीडमाह, 'अहो! वञ्चितोऽहं राजपुत्रानुकारिणा अनेन कुलालेन। तत् दीयतां द्राक् एतस्य चन्द्रार्द्धः।' तथा अनुष्ठिते कुम्भकार आह, 'मा मा एवं कुरु, पश्य मे रणे हस्तलाघवम्।' राजा प्राह, 'भोः! सर्वगुणसम्पन्नो भवान्, तथापि गम्यताम्। यावत् एते राजपुत्राः त्वां कुशलं न जानन्ति, तावत् द्रुततरम् अपसर, नोचेत् एतेषां सकाशात् विडम्बनां प्राप्य मरिष्यसि।' कुलालोऽपि तदाकर्ण्य सत्वरं प्रस्थितः।

४३

## नन्दवररुचितद्भार्य्याणां कथा

अस्ति प्रख्यातबलपौरुषः अनेकनरेन्द्रवृन्दमुकुटमरीचिकाजाल-जटिलीकृत पादपीठः शरच्छशाङ्ककिरणनिर्मलयशाः समुद्रपर्य्यन्तायाः पृथिव्या भर्त्ता नन्दो नाम राजा। तस्य सर्वशास्त्राधिगतसमस्ततत्त्वः सचिवो वररुचिर्नाम। तस्य च प्रणयकलहेन जाया कुपिता। सा च अतीववल्लभा अनेकप्रकारं परितोष्यमाणापि न प्रसीदति। ब्रवीति च भर्त्ता, 'भद्रे! येन प्रकारेण तुष्यसि, तं वद, निश्चितं करोमि।' ततः कथञ्चित् तया उक्तम्,—'यदि शिरो मुण्डयित्वा मम पादयोः निपतसि, तदा प्रसादाभिमुखी भवामि।' तथानुष्ठिते च सा प्रसन्ना आसीत्।

अथ नन्दस्य भार्य्यापि तथा एव रुष्टा प्रसाद्यमानापि न तुष्यति। ततः तेन उक्तम्, 'भद्रे! त्वया विना मुहूर्त्तमपि न जीवामि, पादयोः पतित्वा त्वां प्रसादयामि।' सा अब्रवीत्, अहं तवमुखे खलीनं प्रक्षिप्य पृष्ठे समारुह्य च त्वां धावयामि, धावितस्तु यदि अश्ववत् ह्रेषसे, तदा प्रसन्ना भवामि, राजापि तथा एवं अनुष्ठितम्।

अथ प्रभातसमये सभायामुपविष्टस्य राज्ञः समीपे वररुचिरायातः। तञ्च दृष्ट्वा राजा पप्रच्छ, 'भोः! वररुचे! किं पर्वणि मुण्डितं शिरस्त्वया' सोऽब्रवीत्,

न किं दद्यान्न किं कुर्य्यात् स्त्रीभिरभ्यर्थितो नरः।
अनश्वा यत्र ह्रेषन्ते शिरः पर्वणि मुण्डितम्॥

४४

## पण्डितमूर्खाणां चतुर्णां ब्राह्मणबटूनां कथा

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रत्वमापन्ना वसन्ति स्म। बालभावे तेषां मतिरजायत यत्, देशान्तरं गत्वा विद्याया उपार्जनं क्रियते इति। अथ अन्यस्मिन् दिवसे ते परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जं गताः। तत्र च विद्यामठे गत्वा पठन्ति।

एवं द्वादशाब्दान् यावत् एकचित्ततया विद्याकुशलास्ते सर्वे सञ्जाताः। ततस्तैः चतुर्भिर्मिलित्वा उक्तम्, 'वयं सर्वविद्यापारे गताः, तदुपाध्यायम् उत्कलापयित्वा स्वदेशे गच्छामः।' एवं मन्त्रयित्वा ते उपाध्यायम् उत्कलापयित्वा अनुज्ञां लब्ध्वा च पुस्तकानि नीत्वा प्रचलिताः। यावत् किञ्चित् मार्गं यान्ति तावत् द्वौ पन्थानौ समायातौ दृष्ट्वा उपविष्टाः सर्वे। तत्रैकः प्रोवाच, 'केन मार्गेण गच्छामः ?' एतस्मिन् समये तस्मिन् पत्तने कश्चित् वणिक्पुत्रो मृतः, तस्य दाहार्थं महाजनो गतोऽभूत्। ततश्चतुर्णां मध्ये एकेन पुस्तके अवलोकितम् 'महाजनो येन गतः स पन्था' इति। ततस्तेन अभिहितम् 'तत् महाजनमार्गेन गच्छामः' इति। अथ ते यावत् महाजनमेलापथिकेन सह यान्ति तावत् रासभः कश्चित् तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तकमुद्घाटय अवलोकितम्, 'उक्तञ्च—

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥

तत् अहो! अस्मदीयो बान्धवः।' ततः कश्चित् तस्य ग्रीवायां लगति, कोऽपि पादान् प्रक्षालयति। अथ तैः पण्डितैः दिशाम् अवलोकनं कुर्वद्भिरेव कश्चित् उष्ट्रो द्रुतं गच्छन् दृष्टः। तैश्च उक्तम् 'एतत् किम् ?' ततः तृतीयेन पुस्तकमुद्घाटय उक्तम्, 'धर्मस्य त्वरिता गतिः' इति। 'तन्नूनमेष धर्मः साक्षात् ?' चतुर्थेन उक्तम् 'इष्टं धर्मेण योजयेत्' इति। 'तत् बान्धवोऽयम् अस्माकं धर्मेण नियुज्यताम्।' अथ तैः रासभ उष्ट्रग्रीवायां बद्धः। तत्तु केनचित् स्वामिनः रजकस्य अग्रे कथितम्। श्रुत्वा च असौ रजकः तेषां मूर्खपण्डितानां प्रहारकरणाय समायातः, दृष्ट्वा च तं दूरत एव ते पलायिताः। ततः स्तोकं पन्थानमतिक्रम्य प्रधावद्भिस्तैः काचित् नदी समासादिता। तस्या जलमध्ये पलाशपत्रम् आयातं दृष्ट्वा पण्डितेन एकेन उक्तम्, 'आगमिष्यति यत् पत्रं तदस्मांस्तारयिष्यति' इत्येतत् कथयित्वा तत् पत्रस्य उपरि पतितो यावत् नद्या नीयते तावत् तं नीयमानम् अवलोक्य अन्येन पण्डितेन केशान्तं गृहीत्वा उक्तम्—

सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः।
अर्द्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः॥

इत्युक्त्वा तस्य शिरश्च्छेदो विहितः। अथ तैः पश्चाद् गत्वा कश्चिद् ग्राम आसादितः। ग्रामीणैः निमन्त्रिताश्च पृथक् पृथक् गृहेषु नीताः।

ततः एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता। दृष्ट्वा च तां विचिन्त्य पण्डितेन उक्तं यत् ('दीर्घसूत्री विनश्यति') इति। एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य मण्डका दत्ताः। तेनापि 'अतिविस्तारविस्तीर्णं न तद्भवेत् चिरायुषम्' इत्युक्त्वा भोजनं त्यक्त्वा गतः। अथ तृतीयस्य वटिका-भोजनं दत्तम्। तत्रापि पण्डितेन उक्तम् ('छिद्रेष्वनर्था बहुली भवन्ति।') भोजनं च त्यक्तम्। एवं ते त्रयोऽपि पण्डिताः क्षुत्क्षामकण्ठाः लोकैः हस्यमानाः ततः स्थानात् स्वदेशं प्रत्यागताः।

४५

# दिव्यावदानम्

## (२६)

## अशोकस्य राज्यलाभः

पाटलिपुत्रे नगरे विन्दुसारो नाम राजा राज्यं करोति। तस्य पुत्रो जातः। तस्य सुसीम इति नामधेयं कृतम्। तेन च समयेन चम्पायां नगर्य्यामन्यतमो ब्राह्मणः। तस्य दुहिता जाता अभिरूपा दर्शनीया प्रासादिका जनपदकल्याणी। सा नैमित्तिकैर्व्याकृता—अस्या दारिकाया राजा भर्त्ता भविष्यतीति। श्रुत्वा च ब्राह्मणस्य रोमहर्षो जातः। स तां दुहितरं गृहीत्वा पाटलिपुत्रं गतः। तेन सा सर्वालङ्कारैर्विभूषयिता राज्ञो विन्दुसारस्य भार्य्यार्थमनुप्रदत्ता—इयं हि कन्या धन्या प्रशस्ता चेति। सा राज्ञा विन्दुसारेण अन्तःपुरं प्रवेशिता। अन्तःपुरिकाणां बुद्धिरुत्पन्ना—इयमभिरूपा प्रासादिका जनपदकल्याणी। यदि राजा अनया सार्द्धं परिचारयिष्यति, अस्माकं भूयश्चक्षुःसंप्रेषणमपि न करिष्यतीति। ताभिः सा नापितकर्म शिक्षापिता। सा राज्ञः केशश्मश्रु प्रसाधयति, यावत् सुशिक्षिता संवृत्ता। राज्ञा प्रीतेन वरेण प्रवारिता—किं त्वं वरमिच्छसीति। तया अभिहितम् देवेन मे सह परिणयः स्यादिति। राजा आह—त्वं नापिती, अहं राजा क्षत्रियो मूर्द्धाभिषिक्तः। कथं मया सार्द्धं परिणयो भविष्यति? सा कथयति—देव! नाहं

नापिती, अपि तु ब्राह्मणस्याहं दुहिता। तेन देवस्य पत्न्यर्थं दत्ता। राजा कथयति—केन त्वं नापितकर्म शिक्षापिता? सा कथयति—अन्तःपुरिकाभिः। राजा आह, न भूयस्त्वया नापितकर्म कर्त्तव्यमिति। सा राज्ञा अग्रमहिषी स्थापिता। तस्याः पुत्रो जातः। सा कथयति—अस्य दारकस्य जातस्य अशोकास्मि संवृत्ता। ततस्तस्य अशोक इति नाम कृतम्। अशोको दुःस्पर्शगात्रः। राज्ञो विन्दुसारस्य अनभिप्रेतः।✓

अथ राजा विन्दुसारः कुमारान् परीक्षितुकामः पिङ्गलवत्साजीवं परिव्राजकमामन्त्रयते—उपाध्याय! कुमारांस्तावत् परीक्षामः—क शक्यते ममात्ययाद्राज्यं कारयितुम्। पिङ्गलवत्साजीवः परिव्राजकः कथयति—तेन हि देव कुमारान् आदाय सुवर्णमण्डपमुद्यानं निर्गच्छ, परीक्षामः। यावद् राजा कुमारान् आदाय सुवर्णमण्डपमुद्यानं निर्गतः, अशोकः कुमारो मात्रा चोच्यते—वत्स! राजा कुमारान् परीक्षितुकामः सुवर्णमण्डपमुद्यानं गतः, त्वमपि तत्र गच्छेति। अशोकः कथयति—राज्ञोऽहमनभिप्रेतो दर्शनेनापि, किमहं तत्र गमिष्यामि? सा कथयति—तथापि गच्छेति। अशोक उवाच—आहारं प्रेषय!

राज्ञो विन्दुसारस्य मल्लहको हस्तिनागस्तिष्ठति। अशोकस्तस्मिन् मल्लहकेऽभिरुह्य सुवर्णमण्डपमुद्यानं गत्वा कुमाराणां मध्ये पृथिव्या प्रस्तीर्य्य निषसाद। कुमाराणाम् आहारः उपनामितः। अशोकस्यापि शाल्योदनं दधिसंमिश्रं मृद्भाजने प्रेषितम्। ततो राज्ञा विन्दुसारेण पिङ्गलवत्साजीवः परिव्राजकोऽभिहितः—उपाध्याय! परीक्ष कुमारान् क शक्यते ममात्ययाद्राज्यं कर्त्तुमिति। पश्यति पिङ्गलवत्साजीवः परिव्राजकः चिन्तयति च, अशोको राजा भविष्यति। अयं च राज्ञो नाभिप्रेत.। यदि कथयिष्यामि अशोको राजा भविष्यतीति, नास्ति मे जीवितम्। स कथयति—देव। अभेदेन व्याकरिष्यामि, राजा आह—अभेदेन व्याकुरुष्व। स आह—यस्य यानम् आसनं भाजनं भोजनं पानं शोभनं स राजा भविष्यतीति। अशोकश्चिन्तयति—अहं हस्तिस्कन्धेनागतः, मम यानं शोभनम्, मम पृथिवी आसनं, भाजनं मृन्मयं, शाल्योदनं भोजनं, दधिव्यञ्जनं पानीयं यथाहं पश्यामि, अहं राजा भविष्यामीति। पिङ्गलवत्साजीवस्तया मात्राशोकस्य उच्यते—उपाध्याय! कतरः कुमारो राज्ञो विन्दुसारस्य अत्ययाद् राजा भविष्य-

तीति। स आह—अशोकः। तयोच्यत—कदाचित् त्वां राजा निर्बन्धेन पृच्छेत्। गच्छ त्वं। प्रत्यन्तं समाश्रय। यदा शृणोषि अशोको राजा संवृत्तस्तदा आगन्तव्यम्। ✓

अथ राज्ञो बिन्दुसारस्य तक्षशिला नाम नगरं विरुद्धम्। तत्र राज्ञा बिन्दुसारेण अशोको विसर्जितः—गच्छ कुमार! तक्षशिलानगरं संनाहय। चतुरङ्गं बलकायं दत्तं यानं प्रहरणं च प्रतिषिद्धम्। अशोकः कुमारः पाटलिपुत्रान निर्गच्छन् भृत्यैर्विज्ञप्तः—कुमार! नैवास्माकं सैन्यप्रहरण, केन वयं कं युध्यामः। ततः अशोकेनाभिहितम्—यदि नाम राज्यविपाक्यं कुशलमस्ति, सैन्यप्रहरणं च प्रादुर्भवतु। एवमुक्तं कुमारेण पथिव्यामवकाशो दत्तः। तत्र सैन्यप्रहरणानि चोपनीतानि। कुमारश्चतुरङ्गेन बलकायेन तक्षशिलां गतः। श्रुत्वा तक्षशिलानिवासिनः पौरा अर्द्धततीयानि योजनानि मार्गे शोभां कृत्वा पूर्णघटमादाय प्रत्युद्-गताः। प्रत्युद्गम्य कथयन्ति—न वयं कुमारस्य विरुद्धाः। नापि राज्ञो बिन्दुसारस्य, अपि तु दुष्टामात्या अस्माकं परिभवं कुर्वन्ति इति। महता च सत्कारेण कुमारस्तक्षशिलां प्रवेशितः। ततः पाटलिपुत्रं प्रत्यावृत्तः।

कदाचित् सुसीमः कुमारः उद्यानात् पाटलिपुत्रं प्रविशति। राज्ञो बिन्दुसारस्य अग्रामात्यः खल्लाटकः पाटलिपुत्रात् निर्गच्छति। तस्य सुसीमेन कुमारेण क्रीड़ाभिप्रायतया खटका पातिता। अमात्यश्चिन्तयति—इदानीं खटकां निपातयति। यदा राजा भविष्यति तदा शस्त्रं पातयिष्यति। तथा करिष्यामि यथा राजेव न भविष्यति। तेन पञ्चा-मात्यशतानि भिन्नानि। अशोकं राज्ये प्रतिष्ठापयिष्यामः इत्यमात्यै-र्मन्त्रितम्। सुसीमश्च कुमारस्तक्षशिलां व्याजेन प्रेषितः।

यदा बिन्दुसारः स्वल्पावशेषप्राणः संवृत्तस्तदा अमात्यैरशोकः कुमारः सर्वालङ्कारैर्भूषितः राज्ञो बिन्दुसारस्य उपनीतः—इमं तावत् राज्ये प्रतिष्ठापय इति। ततो राजा रुषितः। अशोकेन चाभिहितम्—यदि मम धर्मेण राज्यं भवति, देवताः पट्टं मम बन्धन्तु। देवताभिः पट्टो बद्धः। तं दृष्ट्वा बिन्दुसारस्य राज्ञः उष्णं शोणितं मुखादागतम्; स च कालगतः। अशोको राज्ये प्रतिष्ठितः। सुसीमेनापि श्रुतम्—बिन्दुसारो राजा कालगतः, अशोको राज्ये प्रतिष्ठितः। इति श्रुत्वा

रुषितोऽभ्यागतस्तक्षशिलायाः। सुसीमश्चाभिहितः—यदि शक्यसे अशोकं घातयितुं राजेति भविष्यसि। स यावदागतस्तावत् पाटलिपुत्रस्य नगरस्य द्वारे परिखां खनयित्वा खदिरङ्गारैश्च पूरयित्वा तृणेनाच्छाद्य अशोकस्य अग्रामात्यो राधगुप्तः स्थितः। सुसीमः परिखायामङ्गार-पूर्णायां पतितस्तत्रैव व्यसनमापन्नः। ✓

४६

## गुप्तसम्राट्समुद्रगुप्तस्य हरिषेणकृत-प्रशस्तिः

आर्य्यो हीत्युपगुह्य भावपिशुनैरुत्कर्णितं रोमभिः
सभ्येषूच्छ्‌वसितेषु तुल्यकुलजम्लानाननोद्वीक्षितः।
स्नेह-व्यालुलितेन बाष्पगुरुणा तत्त्वेक्षिणा चक्षुषा
यः पित्राभिहितो निरीक्ष्य निखिलां पाह्येवमुर्वीमिति।

तस्य विविधसमरशतावतरणदक्षस्य स्वभुजबलपराक्रमैकबन्धोः पराक्रमाङ्कस्य **कौसलक-महेन्द्र-माहाकान्तारक-व्याघ्रराज-कौरालक-मण्टराज-पष्टपुरक-महेन्द्रगिरि-कौट्टूरक-स्वामिदत्त-एरण्डपल्लक-दमन-काञ्चयक-विष्णुगोग-अवमुक्तक-नीलराज-वैङ्गेयक-हस्तिवर्म्म-पालक्कक-उग्रसेन-दवराष्ट्रक-कुबर-कौस्थलपुरक-धनञ्जय-प्रभृति-सर्वदक्षिणापथ-राज**-ग्रहणमोक्षानुग्रह-जनितप्रतापोन्मिश्र-माहाभाग्यस्य **रुद्रदेव-मतिल-नागदत्त-चन्द्रवर्म्म-गणपतिनाग-नागसेन-अच्युत नन्दि-बलवर्म्मादि**-अनेक-आर्यावर्त-राज-प्रसभोद्धरणोद्वृत्त-प्रभाव-महतः परिचारकीकृत-सर्व-**आटविक**-राजस्य **समतट-डवाक-कामरूप-नेपाल-कर्तृपुरादि**-प्रत्यन्त-नृपतिभिः **मालव-आर्जुनायन-यौधेय-मद्रक-आभीर-प्रार्जुन-सनकानिक-काक-खरपरिका**दिभिश्च सर्वकरदानाज्ञाकरण-प्रणामागमन परितोषित-प्रचण्डशासनस्य अनेकभ्रष्टराज्योत्सन्नराजवंश-प्रतिष्ठापनोद्भूत-निखिलभुवनविचरणशान्तयशसः **दैवपुत्र षाहि-षाहानुषाहि-शक-मुरुण्डैः सैंहलका**दिभिश्च सर्वद्वीपवासिभिरात्मनिवेदन-कन्योपायन-दान-गरुत्मदङ्क-स्वविषयभुक्तिशासन-याचनाद्युपाय-सेवाकृत-बाहु-वीर्य्यप्रसरधरणि **बन्धस्य*** पृथिव्यामप्रतिरथस्य विग्रहवतो लोकानुग्रहस्य निशित-

विदग्धमतिगान्धर्वललितैर्व्रीडितत्रिदशपतिगुरुतुम्बुरुनारदादेः विद्वज्जनोपजीव्यानेककाव्यक्रियाभिः प्रतिष्ठितकविराजशब्दस्य देवस्य महाराज-श्रीगुप्तप्रपौत्रस्य महाराजश्रीघटोत्कचपौत्रस्य महाराजाधिराज **श्रीचन्द्रगुप्तपुत्रस्य** लिच्छविदौहित्रस्य महादेव्यां कुमारदेव्यामुत्पन्नस्य महाराजाधिराज**श्रीसमुद्रगुप्तस्य** व्याप्तनिखिलावनितलां कीर्त्तिमितस्त्रिदशपतिभवनगमनावाप्तललितसुखविचरणाम् आचक्षाण इव भुवो बाहुरयम् उच्छ्रितः स्तम्भः। एतच्च काव्यमेषामेव भट्टारकपादानां दासस्य महादण्डनायकध्रुवभूतिपुत्रस्य सान्धिविग्रहिक-कुमारामात्यमहादण्डनायकहरिषेणस्य सर्वभूतसुखायास्तु। अनुष्ठितं च परमभट्टारकपादानुध्यातेन महादण्डनायकतिलभट्टकेन।

४७

# विष्णुपुराणम्

**द्वितीयः अंशः—तृतीयोऽध्यायः**

## भारतवर्षवर्णनम्

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तत् भारतं नाम भारती यत्र सन्ततिः॥१॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने।
कर्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम्॥२॥
महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः।
विन्ध्यश्च पारिपात्रश्च सप्तात्र कुलपर्वताः॥३॥
अतः सम्प्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति वै।
तिर्य्यक्त्वं नरकञ्चापि यान्त्यतः पुरुषा मुने॥४॥
इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते।
न खल्वन्यत्र मर्त्त्यानां कर्म भूमौ विधीयते॥५॥

भारतस्यास्य वर्षस्य नव भेदान् निशामय ।
इन्द्रद्वीपः कशेरुमान् ताम्रपर्णो गभस्तिमान् ।
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥६॥
अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः ।
योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरात् ॥७॥
पूर्वे किराता यस्य स्युः पश्चिमे यवनाः स्थिताः ।
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः ॥८॥
इज्यायुद्धवाणिज्याद्यैर्वर्त्तयन्तो व्यवस्थिताः ।
शतद्रुचन्द्रभागाद्या हिमवत् पादनिर्गताः ॥९॥
वेदस्मृतिमुखाद्याश्च पारिपात्रोद्भवा मुने ।
नर्मदा सुरसाद्याश्च नद्यो विन्ध्याद्रिनिर्गताः ॥१०॥
तापीपयोष्णीनिर्विन्ध्याप्रमुखा ऋक्षसम्भवाः ।
गोदावरी भीमरथी कृष्णवेण्यादिकास्तथा ॥११॥
सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः ।
कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः ॥१२॥
त्रिसामाचार्य्यकुल्याद्या महेन्द्रप्रभवाः स्मृताः ।
ऋषिकुल्याकुमार्य्याद्याः शुक्तिमत्पादसम्भवाः ॥१३॥
आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः ।
तास्विमे कुरुपाञ्चाला मध्यदेशादयो जनाः ॥१४॥
पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ।
पुण्ड्राः कलिङ्गा मगधा दाक्षिणात्याश्च सर्वशः ॥१५॥
तथापरान्ताः सौराष्ट्राः शूराभीरास्तथार्बुदाः ।
कारूषा माल्यवांश्चैव पारिप्रात्रनिवासिनः ॥१६॥
सौवीराः सैन्धवा हूणाः शाल्वाः शाकलवासिनः ।
मद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा ॥१७॥
आसां पिबन्ति सलिलं वसन्ति सरितां सदा ।
समीपतो महाभागा हृष्टपुष्टजनाकुलाः ॥१८॥
चत्वारि भारते वर्षे युगान्यत्र महामुने ।
कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित् ॥१९॥

तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः ।
दानानि चात्र दीयन्ते परलोकार्थमादरात् ।।२०।।
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ।।२१।।
गायन्ति देवा किल गीतकानि
धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ।।२२।।
कर्माण्यसङ्कल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मभूते ।
अवाप्य तां कर्मभूमिमनन्ते
तस्मिँल्लयं ये त्वमलाः प्रयान्ति ।।२३।।
जानीम नैतत् क्व वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीणाः ।।२४।।

४८

चतुर्थः अंशः

चतुर्थोऽध्यायः

## सगराख्यानम्

कश्यपदुहिता सुमतिर्विदर्भराजतनया च केशिनी द्वे भार्य्ये सगरस्यास्ताम् । ताभ्याञ्चापत्यार्थमाराधित और्व्वः परमेण समाधिना वरमदात् । एका वंशधरमेकं पुत्रम्, अपरा षष्टिं पुत्रसहस्राणि जनयिष्यसीति, यस्या यदभिमतं गृह्यताम् । इत्युक्ते केशिनी पुत्रमेकम्, सुमतिः पुत्रसहस्राणि षष्टिं वव्रे । तथेति च ऋषिणाभिहिते अल्पैरेवाहोभिः

केशिनी असमञ्जसं नाम वंशधरं पुत्रमसूत। सुमत्याः षष्टिः पुत्रसहस्राण्यभवन्। तस्मादसमञ्जसः अंशुमान् नाम कुमारो जज्ञे।

स तु असमञ्जा बाल्यादेवापवृत्तः। पिता चास्याचिन्तयत् अयमतीतबाल्यो बुद्धिमान् भविष्यतीति। अथ तत्रापि वयस्यतीते तच्चरितमेवैनं पिता तत्याज। तान्यपि षष्ठिः कुमारसहस्राणि असमञ्जसश्चरितमनुचक्रुः। ततश्च असमञ्जसश्चरितानुकारिभिः सागरैरपध्वस्तयज्ञादिसन्मार्गे जगति देवाः सकलविद्यामयम् असंस्पृष्टमशेषदोषैर्भगवतः पुरुषोत्तमस्यांशभूतं कपिलर्षिं प्रणम्य तदर्थमूचुः। भगवन् एभिः सगरतनयैरसमञ्जसश्चरितम् अनुगम्यते, कथमेवमेभिरनुसरद्भिर्जगद् भविष्यतीत्यार्त्तजगत्परित्राणाय च भगवतोऽत्र शरीरग्रहणम्। इत्याकर्ण्य भगवान् 'अल्पैरेव दिनैरेते विनङ्क्ष्यन्ति' इत्युक्तवान्।

तत्रान्तरे च सगरो हयमेधमारेभे। तत्र च तत्पुत्रैः अधिष्ठितमस्याश्वं कोऽप्यपहृत्य भुवो विवरं प्रविवेश। ततश्चाश्वान्वेषणाय तनयान् युयोज। ततस्तत्तनयाश्च अश्वखुरपदवीमनुसरन्तोऽतिनिर्बन्धेन वसुधातलमेकैको योजनं योजनमवनेश्चखान। पाताले चाश्वं परिभ्रमन्तम् अवनीपतिनन्दनास्ते ददृशुः। नातिदूरस्थितञ्च भगवन्तमपघने शरत्कालेऽर्कमिव तेजोभिरशेषदिशश्चोद्भासयमानं कपिलर्षिमपश्यन्। ततश्चोद्यतायुधा दुरात्मायमस्मदपकारी यज्ञविधातकर्त्ता हयहर्त्ता हन्यतां हन्यतामित्यधावन्। ततश्च तेनापि भगवता किञ्चिदीषत् परिवर्त्तितलोचनेन विलोकिताः स्वशरीरसमुत्थेनाग्निना दह्यमाना विनेशुः।

सगरोऽप्यनुगम्य तत् पुत्रबलमशेषमश्वानुसारि परमर्षिकपिलतेजसा दग्धमंशुमन्तम् असमञ्जसः पुत्रम् अश्वानयनाय चोदयामास। स तु सगरतनयखातमार्गेण कपिलमुपगम्य भक्तिनम्रस्तथा तथा च तुष्टाव, यथैनं भगवानाह—गच्छैनं पितामहाय अश्वं प्रापय, वरं वृणीष्व च। पुत्र! पौत्रश्च ते स्वर्गाद् गङ्गामानयिष्यतीति। अथांशुमानपि ब्रह्मदण्डहतानाम् अस्मत् पितॄणां स्वर्गाय स्वर्गायोग्यानां स्वर्गप्राप्तिकरं वरमस्माकं भगवान् प्रयच्छतु इत्याह।

तञ्चाह भगवान्—उक्तमेवैतन्मया पौत्रस्ते त्रिदिवाद् गङ्गा भुवमानयिष्यतीति। तदम्भसा संस्पृष्टेषु अस्थिभस्मस्वेते स्वर्गमारोक्ष्यन्ति। भगवद्विष्णुपादाङ्गुष्ठ-विनिर्गतजलस्य हि तन्माहात्म्यं यन्न केवलम्

अभिसन्धिपूर्वकं स्नानाद्युपभोगेषूपकारकम् अनभिसंहितम् अप्येतत्-प्राणस्यास्थिचर्मस्नायुकेशाद्युत्सृष्टं शरीरजं यद् भूपतितं सद्यः शरीरिणं स्वर्गं नयतीत्युक्तः प्रणम्य च भगवतेऽश्वमादाय पितामहयज्ञमाजगाम।

सगरोऽस्याश्वमादाय तं यज्ञं समापयामास। सागरञ्चात्मज-प्रीत्या पुत्रत्वे संकल्पयामास।

४९

# मालविकाग्निमित्रम्

### प्रथमोऽङ्कः

## कालिदासकृतेः समर्थनम्।

एकैश्वर्य्ये स्थितोऽपि प्रणतबहुफले यः स्वयंकृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद् यतीनाम्।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः॥

सूत्रधारः—अलमतिविस्तरेण। (नेपथ्याभिमुखमालोक्य) मारिष! इतस्तावत्।

पारिपार्श्विकः (प्रविश्य)—भाव! अयमस्मि।

सूत्र—अभिहितोऽस्मि परिषदा श्रीकालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम नाटकमस्मिन् वसन्तोत्सवे प्रयोक्तव्यमिति, तदारभ्यतां सङ्गीतम्।

पारिपार्श्विकः—मा तावत्। प्रतियशसां भाससौमिल्लककविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य कृतौ कथं बहुमानः?

सूत्र—अये। विवेकविश्रान्तमभिहितम्। पश्य—

पुराणमित्येव न साधुसर्वं न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः॥

पारि—आर्यमिश्राः प्रमाणम्।

सूत्र—तेन हि त्वरतां भवान्।

# अग्निमित्रस्य कञ्चुकिना संवादः ।

कञ्चुकी—अमात्यो विज्ञापयति—विदर्भगतमनुष्ठेयमनुष्ठितमभूत् । देवस्य तावदभिप्रायं श्रोतुमिच्छामीति ।

राजा—मौद्गल्य ! तत्र भवतोर्भ्रात्रोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि ।

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तन्दिवं विभज्योभौ शीतोष्णकिरणाविव ।।

कञ्चुकी—एवममात्यपरिषदे विज्ञापयामि । (निष्क्रम्य पुनः प्रविश्य) विजयतां देवः । अमात्यो विज्ञापयति—कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येतदेव दर्शनम् ।

द्विधा विभक्तां श्रियमुद्वहन्तौ धुरं रथाश्वाविव संग्रहीतुः ।
तौ स्थास्यतस्ते नृपतेर्निदेशे परस्परावग्रहनिर्विकारौ ।।

राजा—तेन हि मन्त्रिपरिषदं ब्रूहि—सेनान्ये वीरसेनाय लिख्यतामेवं क्रियतामिति ।

कञ्चुकी—यदाज्ञापयति देवः । (निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य) अनुष्ठिता प्रभोराज्ञा । अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात् सोत्तरीय-प्राभृतको लेखः प्राप्तः । प्रत्यक्षीकरोत्वेनं देवः । ✗

राजा—(उत्थाय लेखं सोपचारं गृहीत्वा उपविश्य वाचयति) स्वस्ति, यज्ञशरणात् सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात् परिष्वज्यानुदर्शयति । विदितमस्तु—योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सराय निवर्तनीयो निरर्गलस्तुरङ्गमो विसर्जितः, स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः । तत उभयोः सेनयोर्महानासीत् संमर्दः,

ततः परान् पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमानो मे वाजिराजो निवर्त्तितः ।।

सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति । (लेखशेषं वाचयित्वा) अनुगृहीतोऽस्मि ।

परिव्राजिका—दिष्टया पुत्रविजयेन दम्पती वर्द्धेते देवः वर्द्धते ।

राजा—मौद्गल्य ! ननु कलभेन यूथपथेरनुकृतम् ।

कञ्चुकी—नैतावता वीरविजृम्भितेन चित्तस्य नो विस्मयमादधाति ।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चैरग्नेरपां दग्धुरिवोरुजन्मा ।।

५१

# विक्रमोर्वशीयम्

पञ्चमोऽङ्कः

## देवराजानुग्रहः

राजा—(सविनयम्) भगवन् किमागमनप्रयोजनम् ।

नारदः—राजन् श्रूयतां महेन्द्रसन्देशः ।

राजा—अवहितोऽस्मि ।

नारदः—प्रभावदर्शी मघवा वनगमनाय कृतबुद्धि भवन्तमनुशास्ति ।

राजा—किमाज्ञापयति ।

नारदः—त्रिकालदर्शिभिरादिष्टः सुरासुरविमर्दो भावी । भवांश्च सांयुगीनः सहायः । तेन न त्वया शस्त्रन्यासः कर्त्तव्यः । इयञ्च उर्वशी यावदायुस्ते धर्मचारिणी भवत्विति ।

उर्वशी—अम्महे ! शल्यमिव हृदयादपनीतम् । (अम्महे सल्लं विअ हिअआदो अवणीदं)

राजा—परमानुगृहीतोऽस्मि परमेश्वरेण ।
नारदः—युक्तम् ।

तवकार्यमसौ कुर्यात् त्वञ्च तस्यष्टकायकृत् ।
सूर्यः संवर्द्धयत्यग्निमग्निः सूर्य स्वतेजसा ।।
भो राजन् ! किं ते भूयः प्रियं करोतु पाकशासनः ?

राजा—यदि भगवान पाकशासनः प्रसादं करोतु, ततः

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
सङ्गतं श्रीसरस्वत्योर्भूयादुद्भूतये सताम् ।
अपि च—सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः काममवाप्नोतु सर्वः सर्वत्र नन्दतु ।।

५२

# अभिज्ञानशकुन्तलम्

सप्तमोऽङ्कः

## दुष्मन्त-शकुन्तलयोर्मिलनम्

(ससुतो राजा, शकुन्तला, मारीचः अदितिश्च प्रविशति ।)

मारीचः—(राजानमवलोक्य) दाक्षायणि !

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्मन्त इत्यभिहितो भुवनस्य भर्त्ता ।
चापेन यस्य विनिवर्त्तित-कर्म जातं
तत् कोटिमत् कुलिशमाभरणं मघोनः ।

अदितिः—सम्भावनीयानुभावा अस्य आकृतिः ।
राजा—(उपगम्य) उभाभ्यामपि वासवानुयोज्यो दुष्मन्तः प्रणमति ।
मारीचः—वत्स ! चिरं जीव । पृथिवीं पालय ।
अदितिः—वत्स ! अप्रतिरथो भव ।
शकुन्तला—दारकसहिता वः पादवन्दनं करोमि । (दारअसहिआ वो पादवन्दनं करेमि ।)

मारीचः—वत्से !

आखण्डलसमो भर्त्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीमङ्गला भव ॥

अदितिः—जाते ! भर्त्तुरभिमता भव । अवश्यं दीर्घायुः वत्सस्ते उभयकुलनन्दनो भवतु । उपविशत ।

(सर्वे प्रजापतिमभित उपविशन्ति)

राजा—(भगवन् ! इमाम् आज्ञाकरीं वो गान्धर्वेण विधिना उपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन् अपराद्धोऽस्मि युष्मत्गोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनात् ऊढपूर्वां तद्दुहितरम् अवगतोऽहम् । तत् चित्रमिव मे प्रतिभाति)

मारीचः—वत्स ! अलमात्मापराधशङ्कया । सम्मोहोऽपि त्वयि उपपन्नः । श्रूयताम् ।

राजा—अवहितोऽस्मि ।

मारीचः—यदैव अप्सरस्तीर्थावतरणात् मेनका प्रत्यक्षवैक्लव्यां शकुन्तलामादाय दाक्षायणीमुपागता, तदैव ध्यानादवगतोऽस्मि—दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा, नान्यथेति । स चायम् अङ्गुलीयकदर्शनावसानः ।

राजा—(सोच्छ्वासम्) एष वचनीयान्मुक्तोऽस्मि ।

शकुन्तला—(स्वगतम्) दिष्टया अकारणप्रत्यादेशी न आर्यपुत्रः । न हि शप्तमात्मान स्मरामि । अथवा प्राप्तः मया स हि शापः विरह शून्यहृदयया न विदितः । यतः सखीभ्यां सन्दिष्टास्मि भर्त्रे अङ्गुलीयकं दर्शयितव्यम् इति । (दिट्ठिआ अकालणपच्चादेसी ण अज्जउत्तो । ण हु सत्तं अत्ताणं सुमरेमि । अहवा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो । जदो सहीहिं संदिट्ठह्मि भत्तुणो अङ्गुलीअअं दंसइदव्वंत्ति ।)

मारीचः—वत्से ! विदितार्थासि । तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः कार्य्यः ।

अदितिः—भगवन् ! अस्याः दुहितृमनोरथसम्पत्तेः कण्वः अपि तावत् श्रुतिविस्तारः क्रियताम्। दुहितृवत्सला मेनका इह एव उपचरन्ती तिष्ठति।

शकुन्तला—(आत्मगतम्) मनोगतं मे भणितं भगवत्या। (मणोगअं मे भणिअं भअवदीए)

मारीचः—तपः प्रभावात् प्रत्यक्षं सर्वमेव तत्र भवतः।

राजा—अतः खलु मम अनतिक्रुद्धो मुनिः।

मारीचः—तथाप्यसौ प्रियमस्माभिराप्रष्टव्यः। कः कोऽत्र भोः।

(प्रविश्य)

शिष्यः—भगवन् ! अयमस्मि।

मारीचः—गालव ! इदानीमेव विहायसा गत्वा मम वचनात् तत्र भवते कण्वाय प्रियमावेदय—यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ दुष्मन्तेन प्रतिगृहीता इति।

शिष्यः—यदाज्ञापयति भगवान्।

मारीचः—वत्स ! त्वमपि सापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य राजधानीं प्रतिष्ठस्व।

राजा—यदाज्ञापयति भगवान्।

२३

# कुमारसम्भवम्

### पञ्चमः सर्गः

## उमामहेश्वर-संवादः।

अथाह वर्णी विदितो महेश्वर
स्तदर्थिनी त्वं पुनरेव वर्त्तसे।
अमङ्गलाभ्यासरतिं विचिन्त्य तं
तवानुवृत्तिं न च कर्त्तुमुत्सहे ॥१॥

अवस्तु निर्बन्धपरे ! कथं नु ते
करोऽयमामुक्त विवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना
सहिष्यते तत् प्रथमावलम्बनम् ॥२॥

त्वमेव तावत् परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंस-लक्षणं
गजाजिनं शोणितबिन्दुवर्षि च ॥३॥

चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयो
विकीर्ण केशासु परेत भूमिषु ॥४॥

अयुक्तरूपं किमतः परं वद
त्रिनेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे
पदं चिताभस्मरजः करिष्यति ॥५॥

इयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराज-हार्य्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥६॥

द्वयं गतं साम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावत
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥७॥

वपुर्विरूपाक्षमलक्ष्य-जन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥८॥

निवर्तयास्मादसदीप्सितान्मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूप-सत्क्रिया ॥६॥
इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधर-लक्ष्यकोपया ।
विकुञ्चित-भ्रूलतमाहिते तया
विलोचने तिर्यगुपान्तलोहिते ॥१०॥
उवाच चैनं परमार्थतो हरं
न वेत्सि नूनं यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥११॥
विपत्प्रतीकारपरेण मङ्गलं
निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः
किमेभिराशोपहतात्म-वृत्तिभिः ॥१२॥
अकिञ्चनः सन् प्रभवः स सम्पदां
त्रिलोकनाथः पितृसद्म-गोचरः ।
स भीमरूपः शिव इत्युदीर्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ॥१३॥
विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथ वेन्दुशेखरं
न विश्वमूर्तेरवधार्यते वपुः ॥१४॥
तदङ्गसंसर्गमवाप्य कल्पते
ध्रुवं चिताभस्मरजो विशुद्धये ।
तथाहि नृत्याभिनय-क्रियाच्युतं
विलिप्यते मौलिभिरम्बरौकसाम् ॥१५॥

असम्पदस्तस्य वृषेण गच्छतः
　　प्रभिन्नदिग्वारणवाहनो वृषा।
करोति पादावुपगम्य मौलिना
　　विनिद्रमन्दाररजोऽरुणाङ्गुली ।।१६।।
विवक्षता दोषमपि च्युतात्मना
　　त्वयैकमीशं प्रति साधु भाषितम्।
यमामनन्त्यात्मभुवोऽपि कारणं
　　कथं स लक्ष्यप्रभवो भविष्यति ।।१७।।
अलं विवादेन यथा श्रुतस्त्वया
　　तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरसं मनःस्थितं
　　न कामवृत्तिर्वचनीयमीक्षते ।।१८।।
निवार्यतामालि! किमप्ययं बटुः
　　पुनर्विवक्षुः स्फुरितोत्तराधरः।
न केवलं यो महतोऽपभाषते
　　शृणोति तस्मादपि यः स पापभाक् ।।१९।।
इतो गमिष्याम्यथवेति वादिनी
　　चचाल बाला स्तनभिन्नवल्कला।
स्वरूपमास्थाय च तां कृतस्मितः
　　समाललम्बे वृषराजकेतनः ।।२०।।
तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि
　　र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
　　शैलाधिराजतनया न ययौ न तस्थौ ।।२१।।
अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
　　क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
　　क्लेशः फलेन हि पुनर्नवतां विधत्ते ।।२२।।

# मेघदूतम्

## पूर्वमेघः

कश्चित् कान्ता-विरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तं-गमित-महिमा वर्षभोग्येण भर्त्तुः ।
यक्षश्चक्रे जनकतनया-स्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु ॥१॥

तस्मिन्नद्रौ कतिचिदबला-विप्रयुक्तः स कामी
नीत्वा मासान् कनक-वलय-भ्रंशरिक्त-प्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडा-परिणत-गज-प्रेक्षणीयं ददर्श ॥२॥

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घ्याय तस्मै
प्रीतः प्रीति-प्रमुखवचनं स्वागतं व्याजहार ॥३॥

सन्तप्तानां त्वम् असि शरणं तत् पयोद ! प्रियायाः
सन्देशं मे हर धनपति-क्रोध-विश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणाम्
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥४॥

तां चावश्यं दिवस-गणना-तत्परामेकपत्नीम्
अव्यापन्नाम् अविहत-गति-र्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुम-सदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि-हृदयं विप्रयोगे रुणद्धि ॥५॥

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद ! श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपयुज्य ॥६॥

(अद्रेः शृङ्गं हरति पवनः किंस्विद् इत्युन्मुखीभिर्
　　दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः।
स्थानाद् अस्मात् सरसनिचुलाद् उत्पतोदङमुखः खं
　　दिङ्नागानां पथि परिहरन् स्थूल-हस्तावलेपान् ॥७॥)
सद्यः सीरोत्कषण-सुरभि क्षेत्रम् आरुह्य मालं
　　किञ्चित् पश्चाद् व्रज लघुगति भूय एवोत्तरेण।
त्वाम् आसार-प्रशमित-वनोपप्लवं साधु मूर्ध्ना
　　वक्ष्यत्यध्वश्रम-परिगतं सानुमान् आम्रकूटः ॥८॥
स्थित्वा तस्मिन् वनचर-वधू-भुक्तकुञ्जे मुहूर्तं
　　तोयोत्सर्ग-द्रुततरगतिस्तत्परं वर्त्म तीर्णः।
रेवां द्रक्ष्यस्युपल-विषमे विन्ध्यपादे विशीर्णां
　　भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥९॥
अम्भोविन्दु-ग्रहण-चतुरांश्चातकान् वीक्षमाणाः
　　श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः।
तव्यासन्ने परिणतफल-श्यामजम्बूवनान्ताः
　　संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥१०॥
तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
　　गत्वा सद्यः फलम् अविकलं कामुकत्वस्य लब्धा।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मात्
　　सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्मि ॥११॥
वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
　　सौधोत्सङ्ग-प्रणयविमुखो मा स्म भूरुज्जयिन्याः।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
　　लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥१२॥
(प्राप्यावन्तीन् उदयन-कथा-कोविद-ग्रामवृद्धान्
　　पूर्वोद्दिष्टाम् अनुसर पुरीं श्रीविशालां विशालाम्।
(स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां)
　　शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डम् एकम् ॥१३॥)

प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनम् अभूद् अत्र तस्यैव राज्ञः।
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पाद्
इत्यागन्तून् रमयति जनो यत्र बन्धून् अभिज्ञः ॥१४॥
गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम्।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्व्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥१५॥
(आराध्यैनं शरवणभवं देवम्-उल्लङ्घिताध्वा
सिद्ध-द्वन्द्वैर्जलकण-भयाद् वीणिभिर्मुक्तमार्गः
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥१६॥)
ताम् उत्तीर्य व्रज परिचित-भ्रूलता-विभ्रमाणां
पक्ष्मोत्क्षेपादुपरि-विलसत्-कृष्णसार-प्रभाणाम्
कुन्दक्षेपानुगमधुकर-श्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधू-नेत्रकौतुहलानाम् ॥१७॥
(ब्रह्मावर्त जनपदम् अथ च्छायया गाहमानः
क्षेत्रं क्षत्र-प्रधनपिशुनं कौरवं तद् भजेथाः।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातै-स्त्वम् इव कमलान्यभ्यवर्षन्-मुखानि ॥१८॥)
तस्माद् गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम्।
गौरीवक्त्र-भ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणम् अकरोद् इन्दुलग्नोर्म्मिहस्ता ॥१९॥
तस्यो[1]त्सङ्गे प्रणयिन इव स्रस्तगंगादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्।
या वः काले वहति सलिलोद्गारमुच्चै-र्विमाना
मुक्ताजालग्रथितम् अलकं कामिनीबाभ्रवृन्दम् ॥२०॥).

[1] तस्य इति हिमवतः

## ५५
### उत्तरमेघः

विद्युद्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
　　सगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गम् अभ्रलिहाग्राः
　　प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥१॥
यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पाः
　　हंस-श्रेणीरचितरशना नित्यपद्मा नलिन्यः ।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापाः
　　नित्यज्योत्स्नाः प्रतिहत-तमोवृत्तिरम्याः प्रदोषाः ॥२॥
मन्दाकिन्याः सलिल-शिशिरैः सेव्यमाना मरुद्भिर्
　　मन्दाराणाम् अनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनक-सिकता-मुष्टि-निक्षेप-गूढैः
　　सङ्क्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥३॥
तत्रागारं धनपति-गृहान् उत्तरेणास्मदीयम्
　　दूराल्लक्ष्यं सुरपति-धनुश्चारुणा तोरणेन ।
यस्योपान्ते कृतकतनयः कान्तया वर्द्धितो मे
　　हस्तप्राप्य-स्तवक-नमितो वालमन्दारवृक्षः ॥४॥
सा सन्न्यस्ताभरणम् अबला पेशलं धारयन्ती
　　शय्योत्सङ्गे निहितमसकृद् दुःखदुःखेन गात्रम् ।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यम्
　　प्रायः सर्वो भवति करुणा-वृत्तिरार्द्रान्तरात्मा ॥५॥
तस्मिन् काले जलद! यदि सा लब्ध-निद्रा-सुखा स्याद्
　　अन्वास्यैनां स्तनित-विमुखो याममात्रं सहस्व ।
ताम् उत्थाप्य स्वजल-कनिका-शीतलेनानिलेन
　　प्रत्याश्वस्तां समम् अभिनवैर्जालकैर्मालतीनाम् ॥६॥
भर्त्तुर्मित्रं प्रियम् अविधवे! विद्धि माम् अम्बुवाहं
　　तत्-सन्देशैर्हृदय-निहितैरागतं त्वत्-समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
　　मन्द्र-स्निग्धैर्ध्वनिभिरबला-वेणिमोक्षोत्सुकानि ॥७॥

ताम् आयुष्मन् मम च वचनाद् आत्मनश्चोपकर्तुम्
अ्या एवं तव सहचरो रामगिर्य्याश्रमस्थः।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्याम् अदृश्य-
स्त्वाम् उत्कण्ठाविरचित-पदं मन्मुखेनेदमाह ।।८।।
नन्वात्मानं बहुविगनयन्नात्मनैवावलम्बे
तत् कल्याणि! त्वम् अपि नितरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखम् उपनतं दुःखम् एकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ।।६।।
शापान्तो मे भुजगशयनाद् उत्थिते शार्ङ्गपाणौ
शेषान् मासान् गमय चतुरो लोचने मीलयित्वा
पश्चाद् आवां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणत-शरच्चन्द्रिकासु क्षपासु ।।१०।।

५६

# रघुवंशम्

### पञ्चदशः सर्गः

## सीतायाः पातालप्रवेशः।

अथ प्राचेतसोपज्ञं रामायणमितस्ततः।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ।।१।।
वृत्तं रामस्य बाल्मीकेः कृतिस्तौ किन्नरस्वनौ।
किं तद् येन मनो हर्त्तुमलं स्यातां न शृण्वताम् ।।२।।
रूपे गीते च माधुर्य्यं तयोस्तज्ज्ञैर्निवेदितम्।
ददर्श सानुजो रामः शुश्राव च कुतूहली ।।३।।
तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ।
हिमनिस्यन्दिनी प्रातर्निर्वातेव वनस्थली ।।४।।

वयोवेष-विसंवादी रामस्य च तयोस्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ।।५।।
उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ।।६।।
गेये को नु विनेता वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ।।७।।
अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
ऊरी-कृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ।।८।।
स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः संपरिग्रहम् ।।९।।
तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ।।१०।।
ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ।।११।।
इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वसिद्धि नियमैरिव ।।१२।।
अन्येद्युरथ काकुत्स्थः सन्निपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ।।१३।।
स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ।।१४।।
काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ।।१५।।
जनास्तदालोकपथात् प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ।।१६।।
अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ।।१७।।
वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वम्भरे देवि मामन्तर्द्धातुमर्हसि ।।१८ ।।
एवमुक्ते तया साध्व्या रन्ध्रात् सद्योद्भवाद्भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ।।१९।।

तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी ।
समुद्ररशना साक्षात् प्रादुरासीद्वसुन्धरा ।।२०।।
सा सीतामङ्कमारोप्य भर्त्तृप्रणिहितेक्षणाम् ।
मा मेति व्याहरत्येव तस्मिन् पातालमभ्यगात् ।।२१।।

## ५७

## गुप्तसम्राट्-कुमारगुप्तस्य राज्यकाले वत्सभट्टिरचित-रविभवनशिलालिपिः

यो वृत्त्यर्थमुपास्यते सुरगणैः सिद्धैश्च सिद्धर्यर्थिभि-
र्ध्यानैकाग्रपरैर्विधेयविषयैर्मोक्षार्थिभिर्योगिभिः ।
भक्त्या तीव्रतपोधनैश्च मुनिभिः शापप्रसादक्षमै-
र्हेतुर्यो जगतः क्षयाभ्युदययोः पायात् स वो भास्करः ।।१।।
कुसुमभरानततरुवरदेवकुलसभाविहाररमणीयात् ।
लाट-विषयान्नगावृतशैलाज्जगति प्रथितशिल्पाः ।।२।।
ते देशपार्थिवगुणापहृताः प्रकाशमध्वादिजान्यविरलान्यसुखान्यपास्य ।
जातादरादशपुरं प्रथमं मनोभिरन्वागताः ससुतबन्धुजनाः समेत्य ।।३।।
मत्तेभगण्डतटविच्युतदानबिन्दुसिक्तोपलाचलसहस्रविभूषणायाः ।
पुष्पावनम्रतरुमण्डवतंसकाया भूमेः परं तिलकभूतमिदं क्रमेण ।।४।।
यद्भात्यभिरम्यसरिद्द्वयेन चपलोर्मिणा समुपगूढम् ।
रहसि कुचशालिनीभ्यां प्रीतिरतिभ्यां स्मराङ्गमिव ।।५।।
अथ समेत्य निरन्तरसङ्गतैरहरहः प्रविजृम्भितसौहृदाः ।
नृपतिभिः सुतवत् प्रतिमानिताः प्रमुदिता न्यवसन्त सुखं पुरे ।।६।।
चतुःसमुद्रान्त-विलोल-मेखलां सुमेरु-कैलास-बृहत्-पयोधराम् ।
वनान्तवान्तस्फुटपुष्पहासिनीं **कुमारगुप्ते** पृथिवीं प्रशासति ।।७।।
समानधीः शुक्र-बृहस्पतिभ्यां ललामभूतो भुवि पार्थिवानाम् ।
रणेषु यः पार्थसमानकर्मा बभूव गोप्ता नृप-**विश्ववर्मा** ।।८।।
तस्यात्मजः स्थैर्य्यनयोपपन्नो बन्धुप्रियो बन्धुरिव प्रजानाम् ।
**बन्ध्वर्त्तिहर्त्ता** नृप-**बन्धुवर्मा** द्विड्दृप्त-पक्ष-क्षपणैकदक्षः ।।९।।

कान्तो युवा रणपटुर्विनयान्वितश्च राजापि सन्नुपसृतो न मदैः स्मयाद्यैः ।
शृङ्गारमूर्त्तिरभिभात्यनलंकृतोऽपि रूपेण यः कुसुमचाप इति द्वितीयः ।।१०।।

तस्मिन्नेव क्षितिपतिवृषे बन्धुवर्मण्युदारे
सम्यक्स्फीतं **दशपुरमिदं** पालयत्युन्नतांसे ।
शिल्पावाप्तैर्धनसमुदयैः पट्टवायैरुदारं
श्रेणीभूतैर्भवनमतुलं कारितं दीप्तरश्मेः ।।११।।
विस्तीर्णतुङ्गशिखरं शिखरिप्रकाशम्
अभ्युद्गतेन्द्वमलरश्मि-कलापगौरम् ।
यद्भाति पश्चिमपुरस्य निविष्टकान्त-
चूडामणिप्रतिसमन्नयनाभिरामम् ।।१२।।
रामासनाथरचने दरभास्करांशु-
वह्निप्रतापसुभगे जललीनमीने ।
चन्द्रांशुहर्म्यतलचन्दनतालवृन्त-
हारोपभोगरहिते हिमदग्धपद्मे ।।१३।।
रोध्रप्रियङ्गुतरुकुन्दलताविकोश-
पुष्पासवप्रमुदितालिकलाभिरामे ।
काले तुषारकणकर्कशशीतवात-
वेगप्रनृत्तलवलीनगणैकशाखे ।।१४।।

स्मरवशगतरुणजनवल्लभाङ्गनाविपुलकान्त-पीनोरु-
स्तन-जघन-घनालिङ्गन-निर्भर्त्सिततुहिनहिमपाते ।।१५।।
मालवानां गणस्थित्या याते शतचतुष्टये ।
त्रिनवत्यधिकेऽब्दानामृतौ सेव्यघनस्वने ।।१६।।
सहस्यमास-शुक्लस्य प्रशस्तेऽह्नि त्रयोदशे ।
मङ्गलाचारविधिना प्रासादोऽयं निवेशितः ।।१७।।
बहुना समतीतेन कालेनान्यैश्च पार्थिवैः ।
व्यशीर्य्यतैकदेशोऽस्य भवनस्य ततोऽधुना ।।१८।।
स्वयशोवृद्धये सर्वमत्युदारमुदारया ।
संस्कारितमिदं भूयः श्रेण्या भानुमतो गृहम् ।।१९।।
अत्युन्नतमवदातं नभः स्पृशन्निव मनोहरैः शिखरैः ।
शशिभान्वोरभ्युदयेष्वमलमयूखायतनभूतम् ।।२०।।

वत्सरशतेषु पञ्चसु विंशत्यधिकेषु नवसु चाब्देषु ।
यातेष्वभिरम्यतपस्यमासशुक्लद्वितीयायाम् ॥२१॥
स्पष्टैरशोकतरुकेतकसिन्दुवार-लोलातिमुक्तकलतामदयन्तिकानाम् ।
पुष्पोद्गमैरभिनवैरधिगम्य नूनमैक्यं विजृम्भितशरे हरपूतदेहे ॥२२॥
मधुपानमुदितमधुकरकुलोपगीतनगणैकपृथुशाखे ।
काले नवकुसुमोद्गमदन्तुरकान्तप्रचुररोध्रे ॥२३॥
शशिनेव नभो विमलं कौस्तुभमणिनेव शार्ङ्गिणो वक्षः ।
भवनवरेण तथेदं पुरमखिलमलङ्कृतमुदारम् ॥२४॥
अमलिनशशिलेखादन्तुरं पिङ्गलानां
परिवहति समूहं यावदीशो जटानाम् ।
विकटकमलमालामंससक्तां च शार्ङ्गी
भवनमिदमुदारं शाश्वतं तावदस्तु ॥२५॥
श्रेण्यादेशेन भक्त्या च कारितं भवनं रवेः ।
पूर्वा चेयं प्रयत्नेन रचिता वत्सभट्टिना ॥२६॥

स्वस्ति कर्त्तृलेखकवाचक श्रोतृभ्यः । सिद्धिरस्तु ।

## ५८

# श्रीयशोधर्मणः मान्दासोरस्थः स्तम्भलिपिः

वेपन्ते यस्य भीमस्तनितभयसमुद्भ्रान्तदैत्या दिगन्ताः
शृङ्गाघातैः सुमेरोर्विघटितदृषदः कन्दरा यः करोति ।
उक्षाणं तं दधानः क्षितिधरतनयादत्तपञ्चाङ्गुलाङ्कं
द्राघिष्ठः शूलपाणेः क्षपयतु भवतां शत्रुतेजांसि केतुः ॥१॥
आविर्भूतावलेपैरविनयपटुभिर्लङ्घिताचारमार्गं
र्मोहादैदंयुगीनैरपशुभरतिभिः पीड्यमाना नरेन्द्रैः ।
यस्य क्ष्मा शार्ङ्गपाणेरिव कठिनधनुर्ज्याकिनाङ्कप्रकोष्ठं
बाहुं लोकोपकारव्रतसफलपरिस्पन्दधीरं प्रपन्ना ॥२॥

निन्द्याचारेषु योऽस्मिन् विनयमुषि युगे कल्पनामात्रवृत्त्या
राजस्वन्येषु पांसुष्विव कुसुमबलिर्नाविभासे प्रयुक्तः ।
स श्रेयोधाम्नि सम्राडिति मनुभरतालर्कमान्धातृकल्प
कल्याणे हेम्नि भास्वान् मणिरिव सुतरां भ्राजते यत्र शब्दः ।।३।।
ये भुक्ता गुप्तनाथैर्न सकलवसुधाक्रान्तिदृष्टप्रतापै-
र्नाज्ञा हूणाधिपानां क्षितिपतिमुकुटाध्यासिनी यान् प्रविष्टा ।
देशांस्तान् धन्वशैलद्रुमगहनसरिद्वीरबाहूपगूढान्
वीर्य्यावस्कन्नराज्ञः स्वगृहपरिसरावज्ञया यो भुनक्ति ।।४।।
आ लौहित्योपकण्ठात्तलवनगहनोपत्यकादामहेन्द्रा-
दा गङ्गाश्लिष्टसानोस्तुहिनशिखरिणः पश्चिमादापयोधेः ।
सामन्तैर्यस्य बाहुद्रविणहृतमदैः पादयोरानमद्भि-
श्चूडारत्नांशुराजिव्यतिकरशबला भूमिभागाः क्रियन्ते ।।५।।
स्थाणोरन्यत्र येन प्रणतिकृपणतां प्रापितं नोत्तमाङ्गं
यस्याश्लिष्टो भुजाभ्यां वहतिहिमगिरिर्दुर्गशब्दाभिमानम् ।
नीचैस्तेनापि यस्य प्रणतिभुजबलावर्जनक्लिष्टमूर्ध्ना
चूडापुष्पोपहारैर्मिहिरकुलनृपेणार्चितं पादयुग्मम् ।।६।।
गामेवोन्मातुमूर्द्ध्वं विगणयितुमिव ज्योतिषां चक्रवालं
निर्देष्टुं मार्गमुच्चैर्दिव इव सुकृतोपार्जितायाः स्वकीर्त्तेः ।
तेनाकल्पान्तकालावधिरवनिभुजा श्रीयशोधर्मणायं
स्तम्भः स्तम्भाभिरामस्थिरभुजपरिघेणोच्छ्रितिं नायितोऽत्र ।।७।।
श्लाघ्ये जन्मास्य वंशे चरितमघहरं दृश्यते कान्तमस्मिन्
धर्मस्यायं निकेतश्चलति नियमितं नामुना लोकवृत्तम् ।
इत्युत्कर्षं गुणानां लिखितुमिव यशोधर्मणश्चन्द्रबिम्बे
रागादुत्क्षिप्त उच्चैर्भुज इव रुचिमान् यः पृथिव्या विभाति ।।८।।
इतितुष्टूषया तस्य नृपतेः पुण्यकर्मणः ।
वासुलेनोपरचिताः श्लोकाः कक्कस्य सूनुना ।।९।।

उत्कीर्णा गोविन्देन ।

# किरातार्जुनीयम्

महाकवि-भारवि-कृतम् ।

द्वितीयः सर्गः*

## भीमोपदेशः

विहितं प्रियया मनःप्रिया-
मथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जितश्रियं
नृपमूचे वचनं वृकोदरः ।।१।।
यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं
वचनं तद्विदधीत विस्मयम् ।।२।।
विषमोऽपि विगाह्यते नयः
कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः
सदुपन्यस्यति कृत्यबर्त्म यः ।।३।।
परिणामसुखे गरीयसि
व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः ।।४।।
इयमिष्टगुणाय रोचतां
रुचिरार्था भवतोऽपि भारती ।
ननु वक्तृ-विशेष-निःस्पृहा
गुणगृह्या वचने विपश्चितः ।।५।।

विधुरं किमतः परं परै-
रवगीतां गमिते दशामिमाम् ।
अवसीदति यत् सुरैरपि
त्वयि सम्भावितवृत्ति पौरुषम् ॥६॥

अचिरेण परस्य भूयसीं
विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती
कुरुते तत् प्रतिकारमन्यथा ॥७॥

अनुपालयतामुदेष्यतीं
प्रभुशक्तिं द्विषतामनीहया ।
अपयान्त्यचिरान्महीभुजां
जननिर्वादभयादिव श्रियः ॥८॥

क्षययुक्तमपि स्वभावजं
दधतं धाम शिवं समृद्धये ।
प्रणमन्त्यनपायमुत्थितं
प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥९॥

विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायत-
रगरीयान्न पदं नृपश्रियः ॥१०॥

तदलं प्रतिपक्षमुन्नते-
रवलम्ब्य व्यवसायबन्धताम् ।
निवसन्ति पराक्रमाश्रया
न विषादेन समं समृद्धयः ॥११॥

अभिमानधनस्य गत्वरै-
रसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला
ननु लक्ष्मीः फलमानुषङ्गिकम् ॥१२॥

ज्वलितं न हिरण्यरेतसं
चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः
सुखमुज्झन्ति न धाम मानिनः ।।१३।।
किमपेक्ष्य फलं पयोधरान्
ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः
सहते नान्यसमुन्नतिं यया ।।१४।।
कुरु तन्मतिमेव विक्रमे
नृप निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां
त्वदनुत्साहहता विपत्तयः ।।१५।।
ज्वलतस्तव जातवेदसः
सततं वैरिकृतस्य चेतसि ।
विदधातु शमं शिवेतरा
रिपुनारीनयनाम्बुसन्ततिः ।।१६।।

६०

## महाराजहर्षवर्द्धनस्य ताम्रशासनम्

श्री स्वस्ति महानौहस्त्यश्वजयस्कन्धावाराच्छ्रो-वर्द्धमानकोटचा महाराज-**श्रीनरवर्द्धन**स्तस्य पुत्रस्तत्पादानुध्यात-**श्रीवज्रिणी**देव्यामुत्पन्नः परमादित्यभक्तो महाराज-**श्रीराज्यवर्द्धन**स्तस्यपुत्रस्तत्-पादानुध्यातः **श्रीमदप्सरोदेव्या**मुत्पन्नः परमादित्यभक्तो महाराज-**श्रीमदादित्यवर्द्धन**-स्तस्य पुत्रस्तत्पादानुध्यातः **श्रीमहासेनगुप्तादेव्या**मुत्पन्नश्चतुः-समुद्रातिक्रान्तकीर्त्तिः प्रतापानुरागोपनतान्यराजः प्रजानामार्त्तिहरः परमादित्यभक्तः परमभट्टारकमहाराजाधिराज-**श्रीप्रभाकरवर्द्धन**-स्तस्य पुत्रस्तत्पादानुध्यातः सत्पथोपार्जितानेकद्रविण-भूमिप्रदान-संप्रीणितार्थिहृदयोऽतिशयित-पूर्वराज-चरितो देव्यां **श्रीयशोमत्या**मुत्पन्नः

परमसौगतः सुगत इव परहितैकरतः परमभट्टारकमहाराजाधिराज-श्रीराज्यवर्द्धनः।

राजानो युधि दुष्टवाजिन इव श्रीदेवगुप्तादयः
कृत्वा येन कशाप्रहारविमुखाः सर्वे समं संयताः।
उत्खाय द्विषतो विजित्यवसुधां कृत्वा प्रजानां प्रियं
प्राणानुज्झितवानराति भवने सत्यानुरोधेन यः॥

तस्यानुजस्तत्पादानुध्यातः परममाहेश्वरो महेश्वर इव सर्व-सत्त्वानुकम्पी परमभट्टारकमहाराजाधिराजश्रीहर्षः अहिच्छत्रभुक्तौ वङ्गदीयवैषयिकपश्चिमपथकसम्बद्धमर्कटसागरे समुपागतान् महासामन्त-महाराजदौस्साधसाधनिक-प्रमातारराजस्थानीय-कुमारामात्योपरिकविषय-पतिभटचाटसेवकादीन् प्रतिवासिजानपदांश्च समाज्ञापयति विदितमस्तु यथायमुपरिलिखितग्रामः स्वसीमापर्यन्तः मया पितुः परम-भट्टारकमहाराजाधिराज-श्रीप्रभाकरवर्द्धनदेवस्य मातुर्भट्टारिका महादेवी राज्ञी श्रीयशोमतीदेव्याः ज्येष्ठभ्रातृपरमभट्टारकमहाराजाधिराज-श्रीराज्यवर्द्धनदेवपादानाञ्च पुण्ययशोऽभिवृद्धये भरद्वाजसगोत्र-भट्टवाल-चन्द्रभद्रस्वामिभ्यां प्रतिग्रहधर्मणाग्रहारत्वेन प्रतिपादितः।

कर्मणा मनसा वाचा कर्त्तव्यं प्राणिभिर्हितम्।
हर्षेणैतत् समाख्यातं धर्मार्जनमनुत्तमम्॥

दूतकोऽत्र महाप्रमातारमहासामन्त-श्रीस्कन्दगुप्तः, महाक्षपट-लाधिकरणाधिकृत महासामन्त-महाराज-भानसमादेशादुत्कीर्णम् ईश्वरेणेद-मिति सम्बत् २२, कार्त्ति वदि १।

स्वहस्तो मम श्रीमहाराजाधिराजस्य श्रीहर्षस्य।

# कादम्बरी

महाकवि-बाणभट्टस्य कृतिः

## चन्द्रापीडजन्मवर्णनम्

उज्जयिन्यां भुजबलोपार्जित-भूमण्डलो राजा तारापीडो नामाभूत्। तस्य चन्द्रलेखेव हरजटाकलापस्य कौस्तुभप्रभेव कैटभारातिवक्षः-स्थलस्य सकलान्तःपुरप्रधानभूता महिषी विलासवती नाम। अनपत्यौ तु दम्पती। एकदा राजा विलासवती-भवनगतस्तां रुदती ददर्श। भूपतिस्तामवादीत् कथ्यतां सुन्दरि शुचः कारणमिति। इत्येवमभि-धीयमाना विलासवती यदा न किञ्चित् प्रतिवचः प्रतिपेदे तदा विवृद्ध-बाष्पहेतुमस्याः परिजनमपृच्छत्। अथ तस्याः ताम्बूलकरङ्कवाहिनी सततप्रत्यासन्ना मकरिका नाम राजानमुवाच, अद्य तु चतुर्दशीति भगवन्तं महाकालमर्चितुमितो गतया स्वामिन्या तत्र महाभारते वाच्यमाने श्रुतमपुत्राणां किल न सन्ति लोकाः शुभाः, पुन्नाम्नो नरकात् त्रायते इति पुत्र इति। एतच्छ्रुत्वा भवनमागत्य नाहारमभिनन्दति केवलं रोदितीत्यभिधाय विरराम।

विरतवचनायां तस्यां भूमिपालस्तूष्णीं मुहूर्त्तमिव स्थित्वा दीर्घमुष्णं च निःश्वस्य निजगाद, देवि किमत्र क्रियतां दैवायत्ते वस्तुनि। अतिमात्र-मलं रुदितेन। न वयमनुग्राह्या प्रायो देवतानाम्। जन्मान्तरकृतं हि कर्मफलमुपनयति पुरुषस्येह जन्मनि। न हि शक्यं दैवमन्यथाकर्त्तु-मभियुक्तेनापि। यावत्तु मानुष्यके शक्यमुपपादयितुं तावत् सर्वमुपपाद्य-ताम्। अधिकां कुरु देवि गुरुषु भक्तिम्। द्विगुणामुपपादय देवतासु पूजाम्। ऋषिजनसपर्य्यासु दर्शितादरा भव। परं हि दैवतमृषयो यत्नेनाराधिता यथासमीहितफलानामतिदुर्लभानामपि वराणां दातारो भवन्ति। एवमुक्त्वा निर्गते च तस्मिन् मन्दीभूतशोकावेगा विलासवती देवताराधनेषु ब्राह्मणपूजासु गुरुजनसपर्य्यासु आदरवती बभूव। यद्यच्च किञ्चित् कुतश्चिच्छुश्राव गर्भतृष्णया तत्तत् सर्वं चकार।

कतिपयदिवसापगमे देवताप्रसादात् सरसीमिव प्रतिमाशशी विवेश गर्भो विलासवतीम्। ततः क्रमेण पूर्णे प्रसवसमये पुण्येऽह्नि सकललोकहृदयानन्दकारिणं सा सुतमसूत। अतिक्रान्ते च षष्ठी जागरे प्राप्ते दशमेऽह्नि पुण्ये मुहूर्त्ते गां सुवर्णं च ब्राह्मणसात् कृत्वा राजा स्वसूनोश्चन्द्रापीड इति नाम चकार।

## ६२

## पत्रलेखा-मिलनम्

अपरेद्युः प्रथमे वयसि वर्त्तमानया कन्यकया सहागत्य कैलासनामा कञ्चुकी कृतप्रणामः कुमारं चन्द्रापीडं समुपसृत्य क्षितितलनिहितदक्षिणकरो विज्ञापयामास। कुमार! महादेवी विलासवती समाज्ञापयति। इयं खलु कन्यका महाराजेन पूर्वं कुलूतराजधानीम् अवजित्य कुलूतेश्वरदुहिता पत्रलेखाभिधाना बालिका सती वन्दीजनेन सहानीय अन्तःपुरपरिचारिकामध्यमुपनीता। सा मया विगतनाथा राजदुहितेति समुपजातस्नेहया दुहितृनिर्विशेषम् इयन्तं कालमुपलालिता संवर्द्धिता च। तदियमिदानीम् उचिता भवतः ताम्बूलकरङ्कवाहिनीति कृत्वा मया प्रेषिता। न चास्याम् आयुष्मता परिजनसामान्यदृष्टिणा भवितव्यम्। बालेव लालनीया। स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया। शिष्येव द्रष्टव्या। सुहृदिव सर्वविश्रम्भेष्वभ्यन्तरीकरणीया। दीर्घकाल-संवर्द्धितस्नेहतया स्वसुतायामिव हृदयमस्यामस्ति मे। बलवानस्यां पक्षपातः। महाभिजनराजवंशप्रसूता चार्हतीयमेवंविधानि कर्माणि। नियतं स्वयमेव इयम् अतिविनीततया कतिपयैरेव दिवसैः कुमारमाराधयिष्यति। केवलमतिचिरकालोपचिता बलवती मे प्रेमप्रवृत्तिरस्याम् अविदितशीलश्चास्याः कुमार इति सन्दिश्यते। सर्वथा तथा कल्याणिना प्रयतितव्यं यथेयमतिचिरमुचिता परिचारिका ते भवति। इत्यभिधाय विरतवचसि कैलासे कृताभिजातप्रणामां पत्रलेखामनिमिषलोचनं सुचिरमालोक्य चन्द्रपीडो यथाज्ञापयति अम्बा इत्येवमुक्त्वा कञ्चुकिनं प्रेषयामास।

पत्रलेखा तु ततः प्रभृति दर्शनेनेव समुपजातसेवारसा न दिवा न रात्रौ न सुप्तस्य नासीनस्य नोत्थितस्य न भ्रमतो न राजकुलगतस्य च्छायेव राजसूनोः पार्श्वं मुमोच। चन्द्रापीडस्यापि तस्यां दर्शनादारभ्य प्रतिक्षणमुपचीयमाना महती प्रीतिरासीत्। अभ्यधिकं च प्रतिदिवसमस्याः प्रसादम् अकरोत्। आत्महृदयादव्यतिरिक्तामिव चैनां सर्वविश्रम्भेषु अमन्यत।

६३

# हर्षचरितम्

महाकविना बाणभट्टेन कृतम्

### द्वितीय उच्छ्वासः

## हर्षबाणभट्टसंवादः

'पश्य तावद्देवम' इति अभिधीयमानश्च दौवारिकेन तेन उपदिश्यमानवर्त्मा समतिक्रम्य भूपालसहस्रसङ्कुलानि त्रीणि कक्षान्तराणि चतुर्थे भुक्तास्थानमण्डपस्य पुरस्तादजिरे स्थितं चक्रवर्त्तिनं हर्षमद्राक्षीत् बाणः। दृष्ट्वा च समचिन्तयत्—'सोऽयं सुजन्मा सुगृहीतनामा, तेजसां राशिः, चतुरुदधिकेदारकुटुम्बी परमेश्वरो हर्षः। एतेन च खलु राजन्वती पृथिवी।' इति समुपसृत्य चोपवीती स्वस्तिशब्दमकरोत्। राजा तु तच्छ्रुत्वा दृष्टवा च तं गिरिगुहागतसिंहबृंहितगम्भीरेण स्वरेण पूरयन्निव नभोभागमपृच्छत्—'एष स बाणः' इति। 'यथाज्ञापयति देवः। सोऽयम्' इति विज्ञापितो दौवारिकेण। 'न तावदेनम् अकृतप्रसादः पश्यामि' इति पृष्ठतो निषण्णस्य मालवराजसूनोरकथयत्—'महानयं भुजङ्गः' इति। अगमितनरेन्द्रवचसि तस्मिन् मूके च राजलोके मुहूर्त्तमिव तूष्णीं स्थित्वा बाणो व्यज्ञापयत्—'देव! अविज्ञाततत्त्व इव, अश्रद्दधान इव, नेय इव, अविदितलोकवृत्तान्त इव च कस्मादेवमाज्ञापयसि। महद्भिस्तु यथार्थदर्शिभिर्भवितव्यम्। नार्हसि मामन्यथा सम्भावयितुम् अवशिष्टम्

इव। ब्राह्मणोऽस्मि जातः सोमपायिनां वंशे वात्स्यायनानाम्। यथाकालम् उपनयनादयः कृताः संस्काराः। सम्यक्पठितः साङ्गो वेदः। श्रुतानि यथाशक्ति शास्त्राणि। दारपरिग्रहादभ्यगारिकोऽस्मि। का मे भुजङ्गता? सर्वथा कालेन मां ज्ञास्यति स्वामी स्वयमेव। इत्यभिधाय तूष्णीमभूत्। भूपतिरपि 'एवम् अस्माभिः श्रुतम्' इत्यभिधाय तूष्णीमेवाभवत्। संभाषणासनदानादिना तु प्रसादेन नैनमन्वग्रहीत्। केवलममृतवृष्टिभिः स्नपयन्निव स्नेहगर्भेण दृष्टिपातमात्रेण अन्तर्गतां प्रीतिमकथयत्। अस्ताभिलाषिणि च लम्बमाने सवितरि विसर्जितराजलोकोऽभ्यन्तरं प्राविशत्। बाणोऽपि निर्गत्य निवासस्थानमगमत्। अकरोच् चेतसि 'अतिदक्षिणः खलु देवो हर्षः। यदेवम् अनेकबालचरितचापलोचितकौलीन-कुपितोऽपि मनसा स्निह्यत्येव मयि। सर्वथा करोमि तथा, यथा यथावस्थितं जानाति मामयं कालेन, इत्येवमवधार्य्य सुहृदां बान्धवानां च भवनेषु तावदतिष्ठत्, यावदस्य स्वयमेव गृहीतस्वभावः पृथिवीपतिः प्रसादवानभूत्। अविशच्च पुनरपि नरपतिभवनम्। स्वल्पैरेव चाहोभिः परमप्रीतेन प्रसादजन्मनो मानस्य प्रेम्णो विश्रम्भस्य द्रविणस्य नर्मणः प्रभावस्य च परां कोटिमानीयत नरेन्द्रेण।

६४

षष्ठ उच्छ्वासः

## हर्षवर्द्धनस्य प्रतिज्ञा

आस्थानगतश्च देवो हर्षः सहसैव प्रविशन्तम् अप्रविशता विषण्णवदनेन लोकेनानुगम्यमानम् मलिनेन पटेन प्रावृतवपुषं जीवनधारणलज्जयेव अवनतमुखं स्वामिव्यसनमविच्छिन्नैरश्रुविन्दुभिः विज्ञापयन्तं कुन्तलं नाम बृहदश्ववारं राज्यवर्द्धनस्य प्रसादभूषितम् अभिजाततमं ददर्श। दृष्ट्वा च जाताशङ्कश्चक्षुषि सलिलेन मुखशशिनि श्वसितेन हृदये हुताशेन उत्सङ्गे भुवा दारुणाप्रियश्रवणसमये सममिव सर्वेष्वङ्गेषु अगृह्यत लोकपालैः। तस्माच्च हेलानिर्जितमालवानीकमपि गौडाधिपेन

मिथ्योपचाररचितविश्वासं मुक्तशस्त्रमेकाकिनं विश्रब्धं स्वभवन एव भ्रातरं राज्यवर्द्धनं व्यापादितमश्रौषीत्।

श्रुत्वा च महातेजस्वी प्रचण्डकोपपावकप्रसरपरिचीयमानशोकावेगः सहसैव प्रजज्वाल। अवादीच्च गौडाधिपम् अपहाय कस्तादृशं महापुरुषं तत्क्षण एव निर्व्याजभुजवीर्य्यनिर्जितसमस्तराजकं मुक्तशस्त्रं कलसयोनिमिव कृष्णवर्त्मप्रसूतिरीदृशेन सर्वलोकविगर्हितेन मृत्युना शमयेदार्य्यम्। निजगृहदूषणं जालमार्गप्रदीपकेन कज्जलमिवातिमलिनं केवलमयशः सञ्चितं गौडाधमेन। इत्येतदभिदधत एव अस्य पितुरपि मित्रं सेनापतिः संनिधावेव समुपविष्टः। सिंहनादनामा स्वरेणैव दुन्दुभिघोषगम्भीरेण विज्ञापितवान्, 'देव! देवभूयं गते नरेन्द्रे दुष्ट-गौडभुजङ्ग-जग्धजीविते च राज्यवर्द्धने वृत्ते अस्मिन् महाप्रलये धरणीधारणाय अधुना त्वं शेषः। समाश्वासय अशरणाः प्रजाः। क्ष्मापतीनां शिरःसु प्रयच्छ पादन्यासान्। अद्यैव कृतप्रतिज्ञो गृहाण गौडाधमजीवितध्वस्तये धनुः। न ह्ययम् अरातिरक्तचन्दनचर्चाशिशिरोपचारमन्तरेण शाम्यति देवस्य दुःखदाहज्वरः सुदारुणः। इत्युक्त्वा व्यरंसीत्।

देवस्तु हर्षस्तं प्रत्यवादीत्—करणीयमेवेदम् अभिहितं मान्येन। ईदृशे दुर्जाते जाते जातामर्षनिर्भरे च मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य। श्रूयतां मे प्रतिज्ञा। 'यदि परिगणितैरेव वासरैः निर्गौडां न करोमि मेदिनीं ततस्तनूनपाति पीतसर्पिषि पातयाम्यात्मानम्' इति।

# रत्नावली

महाराज-श्रीहर्षस्य-कृतिः

## चतुर्थोऽङ्कः

## कोशल ग्रहणम्

(प्रविशति राजा, विजयवर्मा, वसुन्धरा च)

विजयवर्मा—(उपसृत्य) जयतु जयतु देवः। देव, दिष्ट्या वर्द्धसे रुमण्वतो विजयेन।

राजा—(सपरितोषम्) अपि जिताः कोशलाः।

विजयवर्मा—देवस्य प्रभावेण।

राजा—साधु रुमण्वन्! साधु। अचिरान्महत्प्रयोजनमनुष्ठितम्। विजयवर्मन्, तत् कथय कथाम्। अतिविस्तरतः श्रोतुमिच्छामि।

विजयवर्मा—देव, श्रूयताम्। वयमितो देवादेशात् कतिपयैरेव अहोभिर्महता बलसमूहेन गत्वा विन्ध्यदुर्गावस्थितस्य कोशल नृपतेर्द्वारमवष्टभ्य सेनाः समावेशयितुमारब्धवन्तः।

राजा—ततस्ततः।

विजयवर्मा—ततः कोशलेश्वरोऽपि अतिदर्पात् परिभवम् असहमानो हास्तिकप्रायमशेषमात्मसैन्यं सज्जीकृतवान्।

राजा—ततस्ततः।

विजयवर्मा—देव! कृतनिश्चयश्चासौ विन्ध्यात् निर्गत्य योद्धुम् अभिमुखः अभवत्। अथ रुमण्वान् बाणान् विमुञ्चन् क्षणेन तं प्रत्यैच्छत्।

अपिच—आहूयाजिमुखे स कोशलपतिर्भग्ने प्रधाने बले।
एकेनैव रुमण्वता शरशतैर्मत्तद्वीपस्थो हतः॥

राजा—ततस्ततः।

विजयवर्मा—देव ! ततो रुमण्वानपि कोशलेषु मद्भ्रातरं ज्यायांसं जय-
वर्माणं स्थापयित्वा शनैः शनैरागच्छत्येव ।
राजा—वसुन्धरे ! उच्यतां यौगन्धरायणः प्रदर्श्यतां मत्प्रसादस्य
विभव इति ।
वसुन्धरा—यद्देव आज्ञापयतीति । (जं देवो आणवेदित्ति)
(विजयवर्मणा सह निष्क्रान्ता)

६६

## रविकीर्तिकृत-द्वितीय-पुलकेशिप्रशस्तिः

तस्याग्रजस्य तनये नहुषानुभावे
लक्ष्म्या किलाभिलषिते पोलेकेशिनाम्नि ।
सासूयमात्मनि भवन्तमतः पितृव्यम्
ज्ञात्वापरुद्धचरितव्यवसायबुद्धौ ।१।
स यदुपचितमन्त्रोत्साहशक्तिप्रयोग-
क्षपितबलविशेषो मङ्गलेशस् समन्तात् ।
स्वतनयगतराज्यारम्भयत्नेन सार्द्धं
निजमतनु च राज्यञ्जीवितञ्चोज्झति स्म ।२।
तावत्तच्छत्रभङ्गे जगदखिलमरात्यन्धकारोपरुद्धं
यस्यासह्यप्रतापद्युतिततिभिरिवाक्क्रान्तमासीत् प्रभातम् ।
नृत्यद्विद्युत्पताकैः प्रजविनि मरुति क्षुण्णपर्य्यन्तभागै-
र्गर्ज्जद्भिर्वारिवाहैरलिकुलमलिनं व्योम यातं कदा वा ।३।
लब्ध्वा कालं भुवमुपगते जेतुमाप्पायिकाख्ये-
गोविन्दे च द्विरदनिकरैरुत्तराम्भेमरथ्याः ।
यस्यानीकैर्युधि भयरसज्ञत्वमेकः प्रयात-
स्तत्रावाप्तं फलमुपकृतस्यापरेणापि सद्यः ।४।

वरदातुङ्गतरङ्गरङ्गविलसद्धंसावलीमेखलां
वनवासीमवमृद्नतस् सुरपुरप्रस्पर्द्धिनीं सम्पदा ।
महता यस्य बलार्णवेन परितस् सञ्छादितोर्व्वीतलं
स्थलदुर्ग्गञ्जलदुर्गतामिव गतं तत्तत्क्षणे पश्यताम् ।५।
गङ्गालुपेन्द्रा व्यसनानि सप्त
हित्वा पुरोपार्जित-सम्पदोऽपि ।
यस्यानुभावोपनतास् सदास-
न्नासन्नसेवामृतपानशौण्डाः ।६।
कोङ्कनेषु यदादिष्टचण्डदण्डाम्बुवीचिभिः ।
उदस्तास्तरसा मौर्य्यपल्वलाम्बुसमृद्धयः ।७।
अपरजलधेर्ल्लक्ष्मीं यस्मिन् पुरीम्पुरभित्प्रभे
मदगजघटाकारैर्न्नावां शतैरवमृद्नति ।
जलदपटलानीकाकीर्ण्णन्नवोत्पलमेचक-
ञ्जलनिधिरिव व्योम व्योम्नस् समो भवदम्बुधिः ।८।
प्रतापोपनता यस्य लाटमालवगूर्जराः ।
दण्डोपनतसामन्तचर्य्याचार्य्या इवाभवन् ।९।
अपरिमित-विभूतिस्फीत-सामन्तसेना-
मुकुटमणिमयूखाक्रान्तपादारविन्दः ।
युधि पतित-गजेन्द्रानीकवीभत्सभूतो
भयविगलितहर्षो येन चाकारि हर्षः ।१०।
भुवमुरुभिरनीकैश् शासितो यस्य रेवा
विविधपुलिनशोभावन्ध्यविन्ध्योपकण्ठः ।
अधिकतरमराजत् स्वेन तेजोमहिम्ना
शिखरिभिरिभवर्ज्यो वर्ष्मणा स्पर्द्धयेव ।११।
विधिवदुपचिताभिश् शक्तिभिश् शक्रकल्प-
स्तिसृभिरपि गुणौघैस् स्वैश्च माहाकुलाद्यैः ।
अगमदधिपतित्वं यो महाराष्ट्रकाणां
नवनवतिसहस्रग्रामभाजां त्रयाणाम् ।१२।

गृहिणां स्वगुणै-स्त्रिवर्ग्गतुङ्गा
विहितान्यक्षितिपालमानभङ्गा ।
अभवन्नुपजातभीतिलिङ्गा
यदनीकेन सकोसलाकलिङ्गाः ।१३।
पिष्टं पिष्टपुरं येन जातं दुर्ग्गमदुर्ग्गम-
ञ्चित्रं यस्य कलेर्वृत्तं जातं दुर्ग्गमदुर्ग्गमम् ।१४।
सन्नद्धवारणघटास्थगितान्तरालं
नानायुधक्षतनरक्षतजाङ्गरागम् ।
आसीज्जलं यदवमर्द्दितमभ्रगर्भ
कौणालमम्बरमिवोर्जितसान्ध्यरागम् ।१५।
उद्धूतामलचामरध्वाजशतच्छत्रान्धकारैर्ब्बलैः
शौर्य्योत्साहरसोद्धतारिमथनैर्म्मौलादिभिष् षड्विधैः ।
आक्रान्तात्मबलोन्नतिम्बलरजस् सञ्छन्नकाञ्चीपुर-
प्राकारान्तरितप्रतापमकरोद् य॒पल्लवानां पतिम् ।१६।
कावेरी द्रुतसफरीविलोलनेत्रा
चोलानां सपदि जयोद्यतस्य यस्य ।
प्रश्च्योतन्मदगजसेतुरुद्धनीरा
संस्पर्शं परिहरति स्म रत्नराशेः ।१७।
चोल केरलपाण्ड्यानां योऽभूत्तत्र महर्द्धये ।
पल्लवानीकनीहारतुहिनेतरदीधितिः ।१८।
उत्साहप्रभुमन्त्रशक्तिसहिते यस्मिन् समस्ता दिशो
जित्वा भूमिपतीन् विसृज्य महितानाराध्य देवद्विजान् ।
वातापीन्नगरीम्प्रविश्य नगरीमेकामिवोर्व्वीमिमाम्
चञ्चन्नीरधिनीलनीरपरिखां सत्याश्रये शासति ।१९।
त्रिंशत्सु त्रिसहस्रेषु भारतादाहवादितः
सप्ताब्दशतयुक्तेषु गतेष्वब्देषु पञ्चसु ।२०। [३७३५]
पञ्चाशत्सु कलौकाले षट्सु पञ्चशतासु च
समासु समतीतासु शकानामपि भूभुजाम् ।२१। [५५६]

तस्याम्बुधित्रयनिवारितशासनस्य
        सत्याश्रयस्य परमाप्तवता प्रसादम् ।
शैलञ्जिनेन्द्रभवनम्भवनम्महिम्नान्
        निर्मापितम् मतिमता रविकीर्त्तिनेदम् ।२२।
प्रशस्तेर्व्वसतेश्चास्याजिनस्य त्रिजगद्गुरो॒ ।
कर्त्ता कारयिता चापि रविकीर्त्ति॒कृती स्वयम् ।२३।
येनायोजि नवेश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म
स विजयतां रविकीर्त्ति॒कविताश्रित-कालिदास-
                                        भारविकीर्त्तिः ।२४।

६७

## भर्तृहरि-शतकत्रयम्

### कर्त्तव्यनिरूपणम्

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
        विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परा देवता
        विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ।।१।।
यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ।।२।।
नैवाकृतिः फलति नैव कुलं न शीलं
        विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
        काले फलन्ति पुरुषस्य यथैव वृक्षाः ।।३।।
वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ।४।।
परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिम् ।।५।।

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः।
विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥६॥
यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ॥७॥
आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमुपैति पश्चात्।
दिनस्य पूर्वार्द्ध-परार्द्धभिन्ना
छायेव मैत्री-खलसज्जनानाम् ॥८॥
अकरुणत्वमकारणविग्रहः
परधने परयोषिति च स्पृहा।
सुजनबन्धुजनेष्वसहिष्णुता
प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥६॥
विपदि धैर्य्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः।
यशसि* चाभिरतिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥१०॥
जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्त्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥११॥
पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान् प्रकटीकरोति।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥१२॥
यः प्रीणयेत् सुचरितैः पितरं स पुत्रो
यद् भर्त्तुरेव हितमिच्छति तत् कलत्रम्।
तन्मित्रमापदि सुखे च समक्रियं यद्
एतत्त्रयं जगति पुण्यकृतो लभन्ते ॥१३॥

तावदेव कृतिनामपि स्फुट-
त्येष निर्मलविवेकदीपकः।
यावदेव न कुरङ्गचक्षुषा
ताड्यते चटुललोचनाञ्चलैः ॥१४॥
विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशिना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यः प्लवेत् सागरे ॥१५॥
भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम्।
वस्त्रं विशीर्णशतखण्डमयी च कन्था
हा हा तथापि विषया न परित्यजन्ति ॥१६॥
व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम्।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥१७॥
आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतं
तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
(जीवे वारितरङ्गचञ्चलतटे सौख्यं कुतः प्राणिनाम् १८।) १
(तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः।
यस्यानुषङ्गिन इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥१९॥) १

# दशकुमारचरितम्

## तृतीय उच्छ्वासः

## उपहारवर्मणः कथा

एषोऽस्मि उपहारवर्मा पर्य्यटन्नेकदा गतो विदेहेषु। मिथिलाम् अप्रविश्यैव बहिः क्वचिद् मठिकाया विश्रमितुम् एत्य कयाऽपि वृद्धतापस्या दत्तपाद्यः क्षणम् अलिन्दभूमाववास्थिषि। तस्यास्तु मद्दर्शनाद् एव किमप्याबद्धधारम् अश्रु प्रावर्तत। 'किम् एतद् अम्ब कथय कारणम्' इति पृष्टा सकरुणम् आचष्ट—'जैवातृक ननु श्रूयते पतिरस्या मिथिलाया प्रहारवर्मा नामासीत्। तस्य खलु मगधराजो राजहंसः परं मित्रमासीत्। तयोश्च वल्लभे वसुमतीप्रियंवदे सख्यम् अप्रतिमम् अधत्ताम्। अथ प्रथमगर्भाभिनन्दितां तां च प्रियसखीं वसुमतीं दिदृक्षुः प्रियंवदा सहभर्त्रा पुष्पपुरम् अगमत्। तस्मिन्नेव काले मालवेन मगधराजस्य महज्जन्यम् अजनि। तत्र लेशतोऽपि दुर्लक्षां गतिम् अगमद् मगधराजः। मैथिलेन्द्रस्तु मालवेन्द्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्मणः सुतैर्विकटवर्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य स्वस्त्रीयात्सुह्मपतेर्दण्डावयवमादित्सुरटवीपथमगाह्य लुब्धकलुप्तसर्वस्वोऽभूत्। तत्सुतेन च कनीयसा हस्तवर्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनम् अगाहिषि। तत्र च मे शार्दूलनखावलीढ़निपतितायाः पाणिभ्रष्टः स बालकः कस्यापि कपिलशवस्य क्रोड़मभ्यलयित। तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयन्त्रमुक्तः क्षणादलिक्षत्। भिल्लदारकैः स वालोऽपाहारि। सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वं कुटीरम् आवेश्य कृपयोपक्रान्तव्रणा स्वस्थीभूय स्वभर्त्तुरन्तिकम् उपतिष्ठासुरसहायतया यावद् व्याकुलीभवामि तावद् ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत्। सा भृशं रुरोद। रुदितान्ते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभतृहस्तगमनम्, आत्मनश्च केनापि वनचरेण व्रणविरोपणम्, स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तितायाा निकृष्टजातिसंसर्गवैक्लब्यात् प्रत्याख्यानपारुष्यम्, तदक्षमेण

चामुना विविक्ते विपिने स्वशिरः कर्तनोद्यमम्, अनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननम्, आत्मनोश्चोपयमनम्, इत्यकथयत्। स तु पृष्टो मैथिलेन्द्रस्यैव कोऽपि सेवकः कारणाविलम्बी तन्मार्गानुसारी जातः। सह तेन भर्तुरन्तिकम् उपसृत्य पुत्रवृत्तान्तेन श्रोत्रमस्य देव्याः प्रियंवदायाश्चादहाव।

स च राजा दिष्टदोषाज्ज्येष्ठपुत्रैश्चिरं विगृह्य पुनरहसहिष्णुतयाऽतिमात्रं चिरं प्रयुध्य बद्धः। देवी च बन्धनं गमिता। दग्धा पुनरहमस्मिन्नपि वार्द्धके हतजीवितम् अपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम्। दुहिता तु मम हतजीविताकृष्टा विकटवर्ममहादेवीं कल्पसुन्दरीं किलाशिश्रियत्। तौ चेद् राजपुत्रौ निरुपद्रवावेवावर्धिष्येताम्, इयता कालेन तवेमां वयोवस्थामस्प्रक्ष्येताम्। तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुः। इति प्रमन्युरभिरुरोद। श्रुत्वा च तापसीगिरमहमपि प्रवृद्धबाष्पो निगूढमभ्यधाम्—'यद्येवम् अम्ब समाश्वसिहि। नन्वस्ति कश्चिन्मुनिस्तया तदवस्थया पुत्राभ्युपपादनार्थं याचितस्तेन स लब्धो वर्द्धितश्च। वार्तेयमतिमहती'। किमनया। सोऽहमस्मि। शक्यश्च मयाऽसौ विकटवर्मा यथा कथंचिदुपश्लिष्य व्यापादयितुम्। अनुजाः पुनरतिबहवः, तैरपि घटन्ते पौरजानपदाः। मां तु न कश्चिदिहत्य ईदृक्तया जनो जानाति। पितरावपि तावन्माँ न संविदाते किमुतेतरे। तदेनमर्थमुपायेन साधयिस्यामि' इत्यगादिषम्। सा तु वृद्धा सरुदितं परिष्वज्य मुहुः शिरस्युपाघ्राय प्रस्नुतस्तनी सगद्गदमगदत—'वत्स चिरं जीव। भद्रं तव। प्रसन्नोऽद्य भगवान् विधिः। अद्यैव प्रहारवमण्यधि विदेहा जाताः, यतः प्रलम्बमानपीनबाहुर्भवानपारमेतच्छोकसागरमद्योत्तारयितुं स्थितः। अहो महद्भागधेयं देव्याः प्रियंवदायाः' इति हर्षनिर्भरा स्नानभोजनादिना मामुपाचरत्।

षष्ठ उच्छ्वासः

# मित्रगुप्तस्य कथा

क्षपान्ते च मित्रगुप्तोऽहं कृतयथोचितनियमस्तमेव प्रियाकन्दुकावतीदर्शनसुभगम् उद्यानोद्देशम् उपगतोऽस्मि। तत्रैव चोपसृत्य कन्दुकावतीभ्राता राजपुत्रो भीमधन्वा निरभिमानम् अनुकूलाभिः कथाभिर्माम् अनुवर्तमानो मुहूर्तम् आस्त। नीत्वा चोपकार्याम् आत्मसमेन स्नानभोजनशयनादिव्यतिकरेणोपाचरत्। तल्पगतं च स्वप्नेनानुभूयमानप्रियादर्शनसुखमायसेन निगडेनातिबलवद्बहुपुरुषैः पीवरभुजदण्डोपरुद्धमबन्धयन्माम् भीमधन्वा। प्रतिबुद्धं च सहसा समभ्यधात्—'अयि दुर्मते श्रुतम् आलपितं हतायाश्चन्द्रसेनाया जालरन्ध्रनिःसृतं तच्चेष्टाबोधप्रयुक्तयाऽनया कुब्जया। त्वं किलाभिलषितो मम भगिन्या वराक्या कन्दुकावत्या, तव किलानुजीविना मया स्थेयं, त्वद्वचः किलानतिक्रमता मया चन्द्रसेना कोशदासाय दास्यते' इत्युक्त्वा पार्श्वचरं पुरुषमेकमालोक्याकथयत्—'प्रक्षिपैनं सागरे' इति। स तु लब्धराज्य इवातिहृष्टः 'देव यदाज्ञापयसि' इति यथादिष्टमकरोत्। अहं तु निरालम्बनो भुजाभ्यामितस्ततः स्पन्दमानः किमपि काष्टं दैवदत्तम् उरसोपश्लिष्य तावद् अप्लोषि यावदपासरद्वासरः शर्वरी च सर्वा। प्रत्युषस्यदृश्यत किमपि वहित्रम्। अमुत्रासन् यवनाः। ते माम् उद्धृत्य रामेषुनाम्ने नाविकनायकाय कथितवन्तः—'कोऽप्ययमायसनिगडबद्ध एव जले लब्धः पुरुषः। सोऽयमपि सिञ्चेत् सहस्रं द्राक्षाणां क्षणेनैकेन' इति। अस्मिन्नेव क्षणे नैकनौकापरिवृतः कोऽपि मद्गुरभ्यधावत्। अबिभयुर्यवनाः। तावदतिजवा नौकाः श्वान इव वराहम् अस्मत्पोतं पर्यरुत्सत। प्रावर्तत च संप्रहारः। पराजायिषत यवनाः। तान् अहम् अगतीन् अवसीदतः समाश्वास्यालपिषम्—'अपनयत मे निगडबन्धनम्। अयम् अहम् अवसादयामि वः सपत्नान्' इति। अमी तथाऽकुर्वन्। सर्वांश्च तान् प्रतिभटान् भल्लवर्षिणा भीमटंकृतेन शार्ङ्गेण लवलवीकृताङ्गान् अकार्षम्। अवप्लुत्य हतविध्वस्तयोधम् अस्मत्पोतसंसक्तपोतम् अमुत्र नाविकनायकम् अनभिसरमभिपत्य जीवग्राहम्

अग्रहीषम्। असौ चासीत् स एव भीमधन्वा। तं चाहम् अवबुध्य जातव्रीडम् अब्रवम्—'तात किं दृष्टानि कृतान्तविलसितानि' इति। ते तु सांयात्रिका मदीयेनैव शृङ्खलेन तमतिगाढं बद्ध्वा हर्षकिलकिलारवम् अकुर्वन् मां चापूजयन्। ✓

दुर्वारा तु सा नौरननुकूलवातनुन्ना दूरम् अभिपत्य कमपि द्वीपं निबिडम् आश्लिष्टवती। तत्र च स्वादु पानीयमेधांसि कन्दमूलफलानि च संजिघृक्षवो गाटपातिताशिलावलयमवातराम। तत्र चासीन्महाशैलः। सोऽहम्—'अहो रमणीयोऽयं पर्वतनितम्बभागः, कान्ततरेयं गन्धपाषाणवत्युपत्यका, शिशिरम् इदं गोत्रवारि, रम्योऽयमनेकवर्णकुसुममञ्जरीमञ्जुलतरस्तरुवनाभोगः' इत्यतृप्ततरया दृशा बहुबहु पश्यन्नलक्षिताध्यारूढक्षोणीधरशिखरः शोणीभूतम् उत्प्रभाभिः पद्मरागसोपानशिलाभिः किमपि नालीकपरागधूसरं सरः समध्यगमम्। तत्र स्नातश्च कांश्चिद् अमृतस्वादून्बिसभङ्गानास्वाद्य, अंसलग्नकह्लारस्तीरवर्तिना केनापि भीमरूपेण ब्रह्मराक्षसेनाभिपत्य 'कोऽसि, कुतस्त्योऽसि' इति निर्भर्त्सयताऽभ्यधीये। निर्भयेन च मया सोऽभ्यधीयत—'सौम्य सोऽहम् अस्मि द्विजन्मा। शत्रुहस्तादर्णवम्, अर्णवाद्यवननावम्, यवननावश्चित्रग्रावाणमेनं पर्वतप्रवरं गतो यदृच्छया अस्मिन् सरसि विश्रान्तः। भद्रं तव' इति। सोऽब्रूत—'न चेद् ब्रवीषि प्रश्नानश्नामि त्वाम्' इति। मयोक्तम्—'पृच्छा तावत् भवतु' इति। अथावयोरेकयाऽऽर्यया ऽऽसीत्संलापः—

किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियहिताय दारगुणाः।
कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा॥

आकर्ण्य धूमिनिगोमिनीनिम्बवतीनितम्बवतीकथा स ब्रह्मराक्षसो माम् अपूपुजत्।

# भट्टिकाव्यम्

## द्वादशः सर्गः

## रामेण सह विभीषणस्य मिलनम्

भ्रूभङ्गमाधाय विहाय धैर्य्यं विभीषणं भीषणरूक्षचक्षुः ।
गिरं जगादोग्रपदामुदग्रः स्वं स्फावयन् शक्ररिपुः प्रभावम् ।।१।।
शिलातरिष्यत्युदके न पर्णं ध्वान्तं रवेः स्यन्त्स्यति वह्निरिन्दोः ।
जेता परोऽहं युधि जेष्यमाणस्तुल्यानि मन्यस्व पुलस्त्यनप्तः ।२।।
अनिवृतं भूतिषु गूढवैरं सत्कारकालेऽपि कृताभ्यसूयम् ।
विभिन्नकर्माशयवाक् कुले नो मा ज्ञातिचेलं भुवि कस्यचिद्भूत् ।।३।।
इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि न ज्ञातयस्तुल्यकुलस्य लक्ष्मीम् ।
नमन्ति शत्रून् न च वन्धुवृद्धि सन्तप्यमानैर्हृदयैः सहन्ते ।।४।।
त्वयाद्य लङ्काभिभवेऽतिहर्षाद् दुष्टोऽतिमात्रं विवृतोऽन्तरात्मा ।
धिक् त्वां मृषा ते मयि दुःस्थवुद्धिर्वदन्निदं तस्य ददौ स पार्ष्णिम् ।।५।।
ततः स कोपं क्षमया निगृह्णन् धैर्य्येण मन्युं विनयेन गर्वम् ।
मोहं धियोत्साहवशादशक्तिं समं चतुर्भिः सचिवैरुदस्थात् ।।६।।
उवाच चैनं क्षणदाचरेन्द्रं सुखं महाराज विना मयास्स्व ।
मुर्खातुरः पथ्यकटूननश्नन् यत् सामयोऽसौ भिषजां न दोषः ।।७।।
करोति वैरं स्फुटमुच्यमानः प्रतुष्यति श्रोत्रसुखैरपथ्यैः ।
विवेकशून्यः प्रभुरात्ममानी महाननर्थः सुहृदां वतायम् ।।८।।
क्रीडन् भुजङ्गेन गृहानुपातं कश्चिद्यथा जीवति संशयस्थः ।
संसेवमानो नृपतिं प्रमूढं तथैव यज्जीवति सोऽस्य लाभः ।।९।।
दत्तः सदोषैर्भवता प्रहारः पादेन धर्म्ये पथि मे स्थितस्य ।
स चिन्तनीयः सह मन्त्रिमुख्यैः कस्यावयोर्लाघवमादधातु ।।१०।।
इति वचनमसौ रजनिचरपतिं वहुगुणमसकृत् प्रसभमभिदधत् ।
निरगमदभयः पुरुषरिपुपुरान्नरपतिचरणौ नवितुमरिनुतौ ।।११।।

अथ तमुपगतं विदितसुचरितं पवनसुतगिरा गिरिगुरुहृदयः।
नृपतिरमदयन्मुदितपरिजनं स्वपुरपतिकरैः सलिलसमुदयैः ॥१२॥

७१

# उत्तररामचरितम्

भवभूति-कृतम्

**षष्ठोऽङ्कः**

## रामेण सह कुशलवयोर्मिलनम्

(ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च)

रामः—(चन्द्रकेतुं परिष्वज्य) अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य ?

चन्द्रकेतुः—कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन। तद्विज्ञापयामि मामिव विशेषेण वा मत्तः शिवेन चक्षुषा पश्यत्वमुं महावीरप्रकाण्डं तातः।

रामः—(लवं निरूप्य) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं वयस्यो वत्सस्य।

लवः—अहो! पुण्यानुभावदर्शनोऽयं महापुरुषः। चन्द्रकेतो! क एते।

चन्द्रकेतुः—प्रियवयस्य! ज्येष्ठतातपादाः।

लवः—कथं रघुनाथः। दिष्ट्या सुप्रभातमद्य यदयं दृष्टो देवः। (सविनयकौतुकं निर्वर्ण्य) तात! प्राचेतसान्तेवासी लवोऽभिवादयते।

रामः—(सस्नेहमालिङ्ग्य) आयुष्मन् एह्येहि।

लवः—मृष्यन्त्विदानीं वालिशतां तातपादाः।

रामः—किमपराद्धं वत्सेन ?

चन्द्रकेतुः—अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन।

रामः—नन्वयमलङ्कारः क्षत्रस्य ।

चन्द्रकेतुः—पश्यतु हि तात ! प्रियवयस्यविनियुक्तजृम्भकास्त्र-निष्कम्प-स्तम्भितानि सर्वतः सैन्यानि ।

रामः—(विलोक्य) वत्स लव ! संह्रियतामस्त्रम् । त्वमपि चन्द्रकेतो ! सान्त्वय सैन्यानि ।

लवः—यथाज्ञापयति तात । (प्रणिधानं नाटयित्वा) प्रशान्त-मस्त्रम् । (चन्द्रकेतुः निष्क्रान्तः)

रामः—वत्स ! सरहस्यप्रयोगसंहरणान्यस्त्राणि आम्नायवन्ति । कुमारस्य कः सम्प्रदायः इति पृच्छामि ।

लवः—स्वतः प्रकाशानि आवयोरस्त्राणि ।

रामः—द्विवचनन्तु कथम् ?

लवः—भ्रातरौ आवां यमजौ ।

रामः—तर्हि द्वितीयः कः ।

नेपथ्ये—भाण्डायन, भाण्डायन,

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे तथेति ।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ।।

लवः—अयमसौ मम ज्यायान् आर्य्यः कुशो नाम भरताश्रमात् प्रति-निवृत्तः ।

रामः—(सकौतुकम्) वत्स, इत आह्वय एतमायुष्मन्तम् ।

लवः—एवम् (इति परिक्रामति)

(ततः प्रविशति कुशः विकटं परिक्रामति च)

रामः—कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः ।

लवः—(उपसृत्य) जयति जयत्यार्य्यः । दृप्तभावं परित्यज्य आर्य्योऽस्मिन् विनयेन वर्त्तताम् ।

कुशः—किमर्थम् ।

लवः—एष देवो रघुपतिस्तिष्ठति । स च स्निह्यत्यावयोः । उत्-कण्ठते च युष्मत्सन्निकर्षस्य ।

कुशः—(सतर्कम्) स रामायणकथानायको ब्रह्मकोषस्य गोपायिता ?

लवः—अथ किम् ।

कुशः—आशंसनीयपुण्यदर्शनः स महात्मा, किन्तु कथम् अस्माभिरुपगन्तव्य इति न सम्प्रधारयामि ।

लवः—अत्युदात्तसुजनः चन्द्रकेतुरौर्मिलेयः प्रियवयस्य इति सख्येन मामुपतिष्ठते । तत्सम्बन्धेन धर्मतात एवायं राजर्षिरिति ।

कुशः—(उपसृत्य) तात! प्राचेतसान्तेवासी कुशोऽभिवादयते ।

रामः—(परिष्वज्य) एहि एहि आयुष्मन् ।

७२

# मालतीमाधवम्

भवभूति चरितम्

प्रथमोऽङ्कः

## भवभूतिपरिचयः

अस्ति दक्षिणापथे विदर्भेषु पद्मनगरं नाम नगरम् । तत्र केचित् तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिनः उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति । तदामुष्यायणस्य तत्रभवतः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्य आत्मसम्भवो भट्टश्रीकण्ठपदलाञ्छनो भवभूतिनामा जातुकर्णीपुत्रः कविः निसर्गसौहृदेन स्वकृतिमेवंप्रायगुणभूयसीम् अस्माकम् अर्पितवान् यत्र खल्वियं वाचोयुक्तिः ।

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रतिनैव यत्नः ।
उत्पत्स्यते मम च कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ।।

अतो यदस्माकमर्पितं प्रियसुहृदात्रभवता भवभूतिनाम्ना प्रकरणं स्वकृतिर्मालतीमाधवं नाम तदेव तत्रभवतः कालप्रियनाथस्य पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः । तत् सर्वे कुशीलवाः सङ्गीतप्रयोगेण मत्समीहितसम्पादनाय प्रवर्त्तन्ताम् ।

# शिशुपालबधम्

## पञ्चदशः सर्गः

## शिशुपालकृतश्रीकृष्णनिन्दनम्

अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ।।१।।
ध्वनयन् सभामथ सनीर-घनरवगभीरवागभीः ।
वाचमवददिति रोषवशादतिनिष्ठुरस्फुटतराक्षरामसौ ।।२।।
यदपूपुजस्त्वमिह पार्थ ! मुरजितमपूजितं सताम् ।
प्रेम विलसति महत्तदहो दयितं जनः खलु गुणीति मन्यते ।।३।।
यदराज्ञि राजवदिहार्घ्यमुपहितमिदं मुरद्विषि ।
ग्राम्यमृग इव हविस्तदयं भजते ज्वलत्सु न महीशवह्निषु ।।४।।
अनृतां गिरं न गदसीति जगति पटहै-र्विघुष्यसे ।
निन्द्यमथ च हरिमर्चयतस्तवकर्मणैव विकशत्यसत्यता ।।५।।
तव धर्मराज इति नाम कथमिहमपष्ठु पट्यते ।
भौमदिनमभिदधत्यथवा भृशमप्रशस्तमपि मङ्गलं जनाः ।।६।।
यदि वार्चनीयतम एष किमपि भवतां पृथासुताः ।
शौरिरवनिपतिभिर्निखिलै-रवमाननार्थमिह किं निमन्त्रितैः ।।७।।
अथवा न धर्ममसुवोधसमयमवयात वालिशाः ।
काममयमिह वृथापलितो हतवुद्धिरप्रणिहितः सरित्सुतः ।।८।।
स्वयमेव शन्तनुतनुज ! यमपि गणमर्घ्यमभ्यधाः ।
तत्र मुररिपुरयं कतमोऽयमनिन्द्यवन्दिवदभिष्टुषे वृथा ।।९।।
अवनिभृतान्त्वमपहाय गणमतिजड़ः समुन्नतम् ।
नीचि नियतमिह यच्चपलो निरतः स्फुटं भवसि निम्नगामुतः ।।१०।।
प्रतिपत्तुमङ्ग ! घटते च न तव नृपयोग्यमर्हणम् ।
कृष्ण ! कलय ननु कोऽहमिति स्फुटमापदास्पदमनात्मवेदिता ।।११।।
असुरस्त्वया न्यबधि कोऽपि मधुरिति कथं प्रतीयते ।
दण्डदलितसरघः प्रथसे मधुसूदनस्त्वमिति सूदयन् मधु ।।१२।।

मुचुकुन्द-तल्पशरणस्य मगधपतिशातितौजसः।
सिद्धमबल! सबलत्वमहो! तव रोहिणीतनयसाहचर्य्यतः॥१३॥
छलयन् प्रजास्त्वमनृतेन कपटपटुरैन्द्रजालिकः।
प्रीतिमनुभवसि नग्नजितः सुतयेष्टसत्य इति सम्प्रतीयसे॥१४॥
धृतवान्न चक्रमरिचक्र-भयचकितमाहवे निजम्।
चक्रधर इति रथाङ्गमदः सततं बिभर्षि भुवनेषु रूढ़ये॥१५॥
जगति श्रिया विरहितोऽपि यदुदधिसुतामुपायथाः।
ज्ञातिजनजनितनामपदान् त्वमतः श्रियः पतिरिति प्रथामगाः॥१६॥
अभिशत्रु संयति कदाचिदविहितपराक्रमोऽपि यत्।
व्योम्नि कथमपि चकर्थपदं व्यपदिश्यसे जगति विक्रमीत्यतः॥१७॥
पृथिवीं बिभर्थ यदि पूर्वमिदमपि गुणाय वर्त्तते।
भूमिभृदिति परहारितभूस्त्वमुदाह्रियस्व कथमन्यथा जनैः॥१८॥
तव धन्यतेयमपि सर्वनृपतितुलितोऽपि यत्क्षणम्।
क्लान्तकरतलधृताचलकः पथिवीतले तुलितभूभृदुच्यसे॥१९॥
त्वमशक्नुवन्नशुभकर्मनिरत! परिपाकदारुणम्।
जेतुमकुशलमतिर्नरकं यशसेऽधिलोकमजयः सुतंभुवः॥२०॥
सकलैर्वपुः सकलदोषसमुदितमिदं गुणैस्तव।
त्यक्तमपगुण! गुणत्रितयत्यजनप्रयासमुपयासि किं मुधा॥२१॥
त्वयि पूजनं जगति जाल्म! कृतमिदमपाकृते गुणैः।
हासकरमघटते नितरां शिरसीव कङ्कतमपेतमूर्द्धजे॥२२॥
अवधीज् जनङ्गम इवैष यदि हतवृषो वृषं ननु।
स्पर्शम् अशुचिवपुरर्हति न प्रतिमाननां तु नितरां नृपोचिताम्॥२३॥
यदि नाङ्गनेति मतिरस्य मृदुरजनि पूतनां प्रति।
स्तन्यमघृणमनसः पिवतः किल धर्मतो भवति सा जनन्यपि॥२४॥
शकटव्युदासतरुभङ्ग-धरणिधर-धारणादिकम्।
कर्म यदयम् अकरोत् तरलः स्थिरचेतसां क इव तेन विस्मयः॥२५॥
अयमुग्रसेनतनयस्य नृपशुरपरः पशून् अवन्।
स्वामिवधमसुकरं पुरुषैः कुरुते स्म यत् परममेतदद्भुतम्॥२६॥
इति वाचमुद्धतमुदीर्य्य सपदि सह वेणुदारिणा।
सोढ़रिपुवलभरोऽसहनः स जहास दत्तकरतालमुच्चकैः॥२७॥

कटुनापि चेद्यवचनेन विकृतिमगमन्न माधवः।
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते ।।२८।।

७४

## चम्पायाम् इन्द्रभद्रेश्वरप्रतिष्ठा

श्रीमान् राजेन्द्रवर्मा जयति विक्रमतया भुजद्वयेनोद्वहन्निव धरणीं सकलचम्पाधिराज्य-वसुमतीतल-पतितशतमखः। तस्य सुरनगरीव राजधान्यासीत्।

नगर्य्याः पश्चिमोद्भूतस्त्रिभिर्लोकैः समर्चितः।
दूरतस्तेजसो भक्त्या सोऽयं भाति महीतले ।।१।।
भद्रं स्वस्थं शुभं यस्माज्जगतां पाति तेजसा।
भद्रस्याधिपतिस्तस्मात् स भद्राधिपतीश्वरः ।।२।।

ततश्च कलियुगदोषातिशयभावेन नावागतैर्जववलसङ्घैः निर्दह्यतेपि नवाम्वराद्रियमिते शककाले स एव शून्योऽभवत्।

वहुवर्षसहस्राणि स वभूव महीतले।
स्वं स्थानं दहनं गन्तुं ह्यकरोत् स्वस्य मायया ।।३।।
तस्यापि पार्थिवं लिङ्गं स्थापितं श्रीन्द्रवर्मणा।
इन्द्रभद्रेश्वरो नाम्ना ततश्चाभूत् स एव वा ।।४।।
तस्यैव स्थापितं तेन द्वयं कोशं चरस्थिरम्।
समुखञ्चरकोशं हि शाके शशियमाद्रिगे ।।५।।

स एव राजा परिपालयन् महीं यदा प्रजास्ताः मुदिताः स्वविक्रमैः।
स्वधर्मयत्नात् प्रथितो महीतले सदा रिपूणाञ्जयति स्म तेजसा ।।६।।

स धर्मकुलसम्पन्नत्यागी शूरसमन्वितः।
शक्त्या पराञ्च निर्जित्य महीं पायात् समन्ततः ।।७।।

तस्म भगवते सकललोकहितकारणाय श्रीन्द्रभद्रेश्वरायेदमिति स भगवान् श्रीमानिन्द्रवर्मा शिवयज्ञक्षेत्रद्वयं शिखिशिखागिरिप्रदेशं भक्त्या शुद्धेन मनसैव दत्तवानिति।

इन्द्रभद्रेश्वरस्यैव सर्वद्रव्यं महीतले।
ये रक्षन्ति रमन्त्येते स्वर्गे सुरगणैः सदा ॥८॥
ये हरन्ति पतन्त्येते नरके वा कुलैः सह।
यावत् सूर्य्योऽस्तिचन्द्रश्च तावन्नरकदुःखिताः ॥९॥
लुब्धेन मनसा द्रव्यं यो हरेत् परमेश्वरात्।
नरकात् न पुनर्गच्छेन् न चिरं तु स जीवति ॥१०॥

[Yang Tikuh Stelae Inscription of Indravarman I of Champā dated 721 Śaka]

७५

## चम्पाराजस्य इन्द्रवर्मणः चरितम्

नमोऽस्तु सर्वदेवेभ्यः प्रजानां निरुपद्रवाः।
राज्ञश्च विजयो नित्यं स्म भवन्तु महीतले ॥१॥
श्रीमान्नरेन्द्रः पृथिवीन्द्रवर्मा ख्यातः स्ववंशजैर्जगति प्रभावैः।
ह्यस्तीति लोके स भुनक्ति भूमिं शक्त्या च निर्जित्य रिपून् हि सर्वान् ॥२॥
चम्पाञ्च सकलां भुक्त्वा स एव परमो नृपः।
तस्य राज्ये सुभिक्षं स्यान्नानाद्रव्याणि सन्ति च ॥३॥
न्यहनत् तस्करान् सर्वान् तमो भानुरिव प्रभुः।
शितरश्मिर्यथा व्योम्नि तथा वंशे च शोभते ॥४॥
अथ कालेन महता शम्भोर्भक्तिपरायणात्।
कीर्त्त्या च धर्मेण सता रुद्रलोकमगान्नृपः ॥५॥
तस्यैव भागिनेयोऽसौ श्रीमान् वीर्य्यतमो नृपः।
सत्यवर्मेति-नामाख्यः ख्यातो लोके स्वकर्मभिः ॥६॥

साद्रिद्रुमार्णवा भूमिर्दिशश्च विदिशस्तथा।
तस्य भावेन महता घूर्णिताश्च समन्ततः ।।७।।
तस्य प्रमुखतः स्थातुं न शक्तो वा परो युधि।
विष्णोर्यथासुरश्चाभूद् दृष्ट्वा तं तु पराङ्मुखः ।।८।।
कान्त्योर्व्या कुसुमायुधेन सदृशः शक्रेण तुल्यो जये
शक्त्युग्रेण यशोऽर्थिनेऽतिवलवान् देवेन्द्रपुत्रोपमः।
मान्यो मानवसङ्गमेषु च सतां तार्क्ष्योग्ररूपो विभु-
र्भावाञ्जयति प्रमथ्य च रिपून् श्रीसत्यवर्मा नृपः ।।६।।
चिरकाले न महता प्राप्ते स निधनं गतः।
ज्ञानेन धर्मसंयुक्तो लोकमैश्वरमाप्नुयात् ।।१०।।
तस्यानुजश्च नृपतिः श्रीमान् धर्मपरोऽभवत्।
इन्द्रवर्मेति विख्यातस्तेजसा वलवान् भुवि ।।११।।
स युद्धे न्यगमत् शत्रून् नृपोऽपि परवीरहा।
समीक्ष्य वलसंयुक्तो मृगेन्द्र इव कुञ्जरान् ।।१२।।
भूमौ विजयते राजा वीर्य्यवान् यशसान्वितः।
सोऽहनत् परसैन्यानि वज्रहस्त इवासुरान् ।।१३।।
व्यरोचत महाप्राज्ञो राजा शूरसमन्वितः।
राज्ये हि धर्मसंयुक्तो धर्मराज इवाभवत् ।।१४।।

स एव राजा श्रीमान् प्रथमतरन्तावदिन्द्रभोगेश्वरं वीरपुरे स्वयमेव स्थापयेत् तिथिकरणमुहूर्त्तनक्षत्रदिवसलग्नयोगेन तदनन्तरम् इन्द्रभद्रेश्वरं स्थापितवान्। अथापि शरदि निर्मलकलशशिराजवंशसम्भूतेन धराधर-तनुजकान्तिकोमलशरीरप्रदेशेन तारागणोदयगिरिशिखरनिशाकरेणेव वर-भवनगवाक्षप्रदेशविनिहितवदनकमलकुड्मलेन मृगदर्पणोत्करसुगन्ध-चन्दनानुलेपनधवलितोरुस्थलवाहुद्वयेन पृथुतरभाग्यसम्पदुपवृंहितपरम-राज्य-राजलक्ष्मीलक्षणोपचितकर्मस्वभावेन परवलस्ववलधनुर्ज्यानिष्पेष-निर्घोषपरिकम्पित-समरभूमिभोगनिश्चल-चित्तचन्द्रप्रभावेण राज्ञेन्द्रवर्मणेह स भगवानिन्द्रपरमेश्वरः सकलजगद्धितकारणः श्रीसत्यवर्मणो वरभवन-स्थाने स्थापितश्चापि परमशुद्धेन मनसा समस्तमुनिजनतपोधनविवुध-विप्रगणेभ्यः परस्परम् उदितप्रवृत्तचित्तेभ्योऽविकृतप्रयत्नेन धनदानैरपि

शकपतिसमये लोकयमपर्वते काले विकसितपक्षनवम्याः निशाया-
मुत्तराषाढ़नक्षत्रेण चन्द्रवारसहितेन कर्कटलग्नेन यावद् वसुमतीपर्वत-
महार्णवाकाशमित्यस्ति तावदेव स्थिरो भवतु।

[Glai Lamov Stelae Inscription of Indravarman I of Champā dated 723 Śaka]

७६

## पालसम्राजो धर्मपालदेवस्य प्रशस्तिः

सर्वज्ञतां श्रियमिव स्थिरमास्थितस्य
वज्रासनस्य वहुमारकुलोपलम्भाः।
देव्या महाकरुणया परिपालितानि
रक्षन्तु वो दशवलानि दिशो जयन्ति ।।१।।
श्रिय इव सुभगायाः सम्भवो वारिराशिश्
शशधर इव भासो विश्वमाह्लादयन्त्याः।
प्रकृतिरवनिपानां सन्ततेरुत्तमाया
अजनि दयितविष्णुः सर्व्वविद्यावदातः ।।२।।
आसीदासागरादुर्व्वीं गुर्व्वीभिः कीर्त्तिभिः कृती।
मण्डयन् खण्डितारातिः श्लाघ्यः श्रीवप्यटस्ततः ।।३।।
मात्स्यन्यायमपोहितुं प्रकृतिभिर्लक्ष्म्याः करं ग्राहितः
**श्रीगोपाल** इति क्षितीशशिरसां चूडामणिस्तत्सुतः।
यस्यानुक्रियते सनातनयशोराशिर्दिशामाशये
श्वेतिम्ना यदि पौर्णमासरजनी ज्योत्स्नातिभारश्रिया ।।४।।
शीतांशोरिव रोहिणी हुतभुजः स्वाहेव तेजोनिधेः
सर्व्वाणीव शिवस्य गुह्यकपतेर्भद्रेव भद्रात्मजा।
पौलोमीव पुरन्दरस्य दयिता श्रीदेद्ददेवीत्यभूत्
देवी तस्य विनोदभूर्मुररिपोर्लक्ष्मीरिव क्ष्मापतेः ।।५।।

ताभ्यां श्रीधर्मपालः समजनि सुजनस्तूयमानावदानः
स्वामी भूमीपतीनामखिलवसुमतीमण्डलं शासदेकः।
चत्वारस्तीरमज्जत्करिगणचरणन्यस्तमुद्राः समुद्रा
यात्रां यस्य क्षमन्ते न भुवनपरिखा विश्वगाशा जिगीषोः ॥६॥
यस्मिन्नुद्दामलीला-चलितबलभरे दिग्जयाय प्रवृत्ते
यान्त्याम्विश्वम्भरायां चलितगिरितिरश्चीनतां तद्वशेन।
भाराभुग्नावमज्जन् मणिविधुरशिरश्चक्रसाहायकार्थं
शेषेनोदस्तदोष्णा त्वरिततरमधोधस्तमेवानुयातम् ॥७॥
यत्प्रस्थाने प्रचलितबलास्फालनादुल्ललद्भि-
र्धूलीपूरैः पिहितसकलव्योमभिर्भूतधात्र्याः।
सम्प्राप्ताया: परमतनुतां चक्रवालं फणानां
मग्नोन्मीलन्मणिफणिपतेर्ल्लाघवादुल्ललास ॥८॥
विरुद्धविषयक्षोभाद् यस्य कोपाग्निरौर्ववत्
अनिवृत्ति* प्रजज्वाल चतुरम्भोधिवारितः ॥९॥
येऽभुवन् पृथुरामराघवनलप्राया धरित्रीभुज-
स्तानेकत्र दिदृक्षुणेव निचितान् सर्व्वान् समं वेधसा।
ध्वस्ताशेषनरेन्द्रमानमहिमा श्रीधर्मपालः कलौ
लोल-श्री-करिणी-निबन्धनमहास्तम्भः समुत्तम्भितः ॥१०॥
यासां नासीरधूलिधवलदशदिशां द्रागपश्यन्नियत्तां
धत्ते मान्धातृसैन्यव्यतिकरचकितो ध्यानतन्द्रीं महेन्द्रः।
तासामप्याहवेच्छापुलकितवपुषां वाहिनीनां विधातुं
साहाय्यं यस्य बाह्वोर्निखिलरिपुकुलध्वंसिनोर्नावकाशः ॥११॥
भोजैर्मत्स्यैः समद्रैः कुरुयदुयवनावन्तिगन्धारकीरै-
र्भूपैर्व्यालोलमौलिप्रणतिपरिणतैः साधु संगीर्य्यमाणः।
हृष्यत्पञ्चालवृद्धोद्धृतकनकमयस्वाभिषेकोदकुम्भो
दत्तः श्रीकान्यकुब्जः सललितचलितभ्रूलतापक्ष्म येन ॥१२॥

---

* लेखे अनिर्वृति इति पाठः दृश्यते। किलूहर्णमहोदयः अनिवृत्ति इति पाठः प्रशस्तः मन्यते।

गोपैः सीम्नि वनेचरैर्वनभुवि ग्रामोपकण्ठ जनैः
क्रीडद्भिः प्रतिचत्वरं शिशुगणैः प्रत्यापणं मानपैः।
लीलावेश्मनि पञ्जरोदरशुकैरुद्गीतमात्मस्तवं
यस्याकर्णयतस्त्रपाविवलितानम्रं सदैवाननम् ॥१३॥

स खलु भागीरथीपथप्रवर्त्तमाननानाविधनौवाटकसम्पादितसेतुबन्धनिहितशैलशिखरश्रेणिविभ्रमात् निरतिशयघनघनाघनघटाश्यामायमानवासरलक्ष्मीसमारब्धसन्ततजलदसमयसन्देहात् उदीचीनानकनरपतिप्राभृतिकृताप्रमेयहयवाहिनीखरखुरोत्खातधूलीधूसरितदिगन्तरालात् परमेश्वरसेवासमायातसमस्तजम्बुद्वीपभूपालानन्तपादातभरनमदवने पाटलिपुत्रसमावासितश्रीमज्जयस्कन्धावारात् परमसौगतो महाराजाधिराजगोपालदेवपादानुध्यातः परमेश्वरः परमभट्टारको महाराजाधिराजः श्रीमान् धर्मपालदेवः कुशली। अभिवर्द्धमानविजयराज्ये संवत् ३२ मार्गदिनानि १२।

श्रीभोगटस्य पौत्रेण श्रीमत्सुभटसूनुना।
श्रीमता तातटेनेदम् उत्कीर्णं गुणशालिना ॥१४॥

७७

# वेणीसंहारम्

### तृतीयोऽङ्कः

## अश्वत्थाम्नः कर्त्तव्यनिर्णयः

(प्रविशति अश्वत्थामा सप्रहारः सूतश्च)

सूतः—परित्रायतां परित्रायतां कुमारः। (इति पादयोः पतति)

अश्वत्थामा—(विलोक्य) अये, कथं तातस्य सारथिरश्वसेनः। आर्य्य। ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि। किं मत्तः परित्राणमिच्छसि।

सूतः—(सकरुणं) कुतोऽद्यापि ते तातः।

अश्वत्थामा—(सावेगं) किं तातो नाम अस्तमुपगतः।

सूतः—अथ किम्।

अश्वत्थामा—हा तात! (इति मोहमुपगतः।)

सूतः—कुमार! समाश्वसिहि, समाश्वसिहि।

अश्वत्थामा—(लब्धसंज्ञः साश्रं) हा तात! हा सुतवत्सल! हा लोकत्रयैकधनुर्धर! हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन्! क्वासि। प्रयच्छ मे प्रतिवचनम्।

सूतः—कुमार! अलमत्यन्तशोकावेगेन। वीरपुरुषोचितां विपत्तिमुपागते पितरि त्वमपि त्वदनुरूपेणैव वीर्य्येण शोकसागरमुत्तीर्य्य सुखी भव।

अश्वत्थामा—(अश्रूणि विमुच्य) आर्य्य! कथय, कथय, कथं तादृग्भुजवीर्य्यसागरः ततोऽपि नामास्तमुपगतः। किं भीमाद् गुरुर्दक्षिणां गुरुगदाद् भीमप्रियः प्राप्तवान्।

सूतः—शान्तं पापम्।

अश्वत्थामा—अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना।

सूतः—कथमेवं भविष्यति।

अश्वत्थामा—गोविन्देन सुदर्शनस्य निशितं धारापथं प्रापितः।

सूतः—एतदपि नास्ति।

अश्वत्थामा—शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम्।

सूतः—कुमार!

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदास्य विहितं रिपुणातिघोरम्॥

अश्वत्थामा—किं पुनः कारणं शोकस्यास्त्रपरित्यागस्य वा।

सूतः—ननु कुमार एव कारणम्।

अश्वत्थामा—कथमहमेव नाम।

सूतः—श्रूयताम्। (अश्रूणि विमुच्य)

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच॥

अश्वत्थामा—हा तात! हा सुतवत्सल! हा वृथा मदर्थपरित्यक्त-जीवित! हा शौर्य्यराशे! हा शिष्यप्रिय! हा युधिष्ठिर-पक्षपातिन्! (इति रोदिति)

सूतः—कुमार! अलमत्यन्तपरिदेवनया कार्पण्येन।

अश्वत्थामा—श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात! त्वया सह शरीरसवो विमुक्ताः।
जीवाम्यहं पुनरहो भवता विनापि
क्रूरे तन्मयि मुधा तव पक्षपातः॥

(इति मोहमुपगतः।)

सूतः—समाश्वसितु समाश्वसितु कुमारः।

(ततः प्रविशति कृपः।)

कृपः—(सोद्वेगं निःश्वस्य)
धिक् सानुजं कुरुपतिं धिग् अजातशत्रुं
धिग् भूपतीन् विफलशस्त्रभृतो धिग् अस्मान्।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरेव वीक्षितो यैः॥

तत् कथं नु खलु वत्समद्य द्रक्ष्यामि अश्वत्थामानम्। अथवा हिमवत्सारगुरुचेतसि ज्ञातलोकस्थितौ तस्मिन्न खलु शोकावेगमहम् आशङ्के। किन्तु पितुः परिभवमसदृशम् उपश्रुत्य न जाने किं व्यवस्यतीति। (विलोक्य) तदयं वत्सस्तिष्ठति। यावदुपसर्पामि। (उपसृत्य ससम्भ्रमम्) वत्स। समाश्वसिहि समाश्वसिहि।

अश्वत्थामा—(संज्ञां लब्ध्वा साश्रं) हा तात! हा सकलभुवनैकगुरो! (आकाशे) युधिष्ठिर! युधिष्ठिर!

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः।
ताते गुरौ द्विजवरे मम भाग्यदोषात्
सर्वं तदेकपद एव कथं निरस्तम्।।

सूतः—कुमार! एष ते मातुलः पार्श्वे शारद्वतस्तिष्ठति।

अश्वत्थामा—(पार्श्वे विलोक्य सबाष्पं)
मातुल! भवतः स्वसुः श्लाघ्यो भर्त्ता क्व नु खलु स गतः?

कृपः—परिगतपरिगन्तव्य एव भवान्। तदलम् अत्यन्तशोकावेगेन।

अश्वत्थामा—मातुल! परित्यक्तमेव मया परिदेवितम्। एषोऽहं सुतवत्सलं तातमेव अनुगच्छामि।

कृपः—वत्स! अनुपपन्नमीदृशं व्यवसितं भवद्विधानाम्।

सूतः—कुमार! अलमतिसाहसेन।

अश्वत्थामा—आर्य्य शारद्वत!
मद्वियोगभयात्तातः परलोकमितो गतः।
करोम्यविरहं तस्य वत्सलस्य सदा पितुः।।

कृपः—वत्स! यावदयं संसारस्तावत् प्रसिद्धा इव इयं लोकयात्रा यत्पुत्रैः पितरो लोकद्वयेऽपि अनुवर्त्तनीयाः। पश्य।
निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः।
तस्योपकारे शक्तस्त्वं किं जीवन् किमुतान्यथा।।

सूतः—आयुष्मन्! यथैव मातुलस्ते शारद्वतः कथयति तत्तथा।

अश्वत्थामा—आर्य्य! सत्यमेव इदम्। किन्तु अतिदुर्वहत्वात् शोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान् धारयितुम्। तद् गच्छामि तमेवोद्देशं यत्र तथाविधमपि पितरं द्रक्ष्यामि।

(नेपथ्ये)

भो भो राजानः! कथमिह भवन्तः सर्वे गुरोर्भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते।

अश्वत्थामा—(आकर्ण्य, शनैः शनैः शस्त्रं स्पृशन्) किं गुरोर्भारद्वाजस्य परिभवः।

(पुनर्नेपथ्ये)

आचार्य्यस्य त्रिभूवनगुरोर्न्यस्तशस्त्रस्य शोकाद्
द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य।
मौलौ पाणि पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिविरमयं याति सर्वे सहध्वम्॥

अश्वत्थामा—(सक्रोधं सकम्पं च) कि नामेदम्।

कृपः—वत्स! एवं किल जनः कथयति।

अश्वत्थामा—कि तातस्य दुरात्मना परिमृष्टमभूत् शिरः।

सूतः—(सभय) कुमार! आसीदय तस्य तेजोराशेर्देवस्य नवः परिभवावतारः।

अश्वत्थामा—हा तात! हा पुत्रप्रिय! मम मन्दभागधेयस्य कृते शस्त्र-परित्यागात् तथाविधेन क्षुद्रेणात्मना परिभावितः। युधिष्ठिर! युधिष्ठिर! अजातशत्रो! अमिथ्यावादिन्! धर्मपुत्र! सानुजस्य ते किमनेनापकृतम्। अथवा किमनेनालीकप्रकृतिजिह्मचेतसा। अर्ज्जुन! सात्यके! बाहुशालिन् वृकोदर! माधव! (युक्तं नाम भवतां सुरासुरमनुजलोकैक-धनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्य्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गम् उपेक्षितुम्।) अथवा सर्व एव ते पातकिनः। किमेतैः।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनाम्
अयमहमसृङ्मेदोमांसैः करोमि दिशां वलिम्॥

कृपः—कि न संभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति।

अश्वत्थामा—सूत! गच्छ त्वं सर्वोपकरणैः सांग्रामिकैः सर्वायुधैरुपेतं महाहवलक्षणं नाम अस्मत् स्यन्दनम् उपनय।

सूतः—यदाज्ञापयति कुमारः। (निष्क्रान्तः)

कृपः—वत्स ! अवश्यप्रतिकर्त्तव्येऽस्मिन् दारुणे निकाराग्नौ सर्वेषाम् अस्माकं कोऽन्यः त्वामन्तरेण शक्तः प्रतिकर्त्तुम्। किन्तु—

अश्वत्थामा—किमतःपरम्।

कृपः—सैनापत्येऽभिषिच्य भवन्तमिच्छामि समरभुवम् अवतारयितुम्।

अश्वत्थामा—मातुल ! परतन्त्रमिदम् अकिञ्चित्करं च।

कृपः—वत्स ! न खलु परतन्त्रम् नाकिञ्चित्करं च। पश्य—

भवेदभीष्ममद्रोणं धार्त्तराष्ट्रबलं कथम्।
यदि तत्तुल्यकक्षोऽत्र भवान् धुरि न युज्यते।।

(कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं, किं पुनर्यौधिष्ठिरं बलम्। तदेवं मन्ये परिकल्पिताभिषेकोपकरणः कौरवराजो नाचिरात् त्वामेव अभ्यपेक्षमाणस्तिष्ठतीति।)

अश्वत्थामा—यद्येवं तदहं गत्वा कुरुपतिं मन्दसंतापं करोमि।

कृपः—वत्स ! एवमिदम्। अतस्तमेव उद्देशं गच्छावः।

(इति परिक्रामतः)

७८

## शङ्कराचार्यकृतगङ्गास्तवः

देवि सुरेश्वरि भगवति गङ्गे त्रिभुवनतारिणि तरलतरङ्गे।
शङ्करमौलिनिवासिनि विमले मम मतिरास्तां तव पदकमले।।१।
भागीरथि सुखदायिनि मातः तव जलमहिमा निगमे ख्यातः।
नाहं जाने तव महिमानं त्राहि कृपामयि मामज्ञानम्।।२।।
हरिपादपद्मतरङ्गिणि गङ्गे हिमविधुमुक्ता-धवलतरङ्गे।
दूरीकुरु मम दुस्कृतिभारं कुरु कृपया भवसागरपारम्।।३।।

तव जलममलं येन निपीतं परमपदं खलु तेन गृहीतम्।
मातर्गङ्गे त्वयि यो भक्तः किल तं द्रष्टु न यमः शक्तः ।।४।।
पतितोद्धारिणि जाह्नवि गङ्गे खण्डितगिरिवरमण्डितभङ्गे।
भीष्मजननि खलु मुनिवरकन्ये पतितनिवारिणि त्रिभुवनधन्ये ।।५।।
कल्पलतामिव फलदां लोके प्रणमति यस्त्वां न पतति शोके।
पारावारविहारिणि गङ्गे विवुधवधूकृततरलापाङ्गे ।।६।।
तव कृपया चेत् स्रोतस्नातः पुनरपि जठरे सोऽपि न जातः।
नरकनिवारिणि जाह्नवि गङ्गे कलुषविनाशिनि महिमोत्तुङ्गे ।।७।।
परिलसदङ्गे पुण्यतरङ्गे जय जय जाह्नवि करुणापाङ्गे।
इन्द्रमुकुटमणिराजितचरणे सुखदे शुभदे सेवकशरणे ।।८।।
रोग शोक पापं ताप हर मे भगवति कुमतिकलापम्।
त्रिभुवनसारे वसुधाहारे त्वमसि गतिर्मम खलु संसारे ।।९।।
अलकानन्दे परमानन्दे कुरु मयि करुणा कातरवन्द्ये।
तव यस्य निवासः खलु वैकुण्ठे तस्य निवासः ।।१०।।
वरमिह नीरे कमठो मीनः किंवा तीरे सरटः क्षीणः।
अथ गव्यूतौ श्वपचो दीनः न पुनर्दूरे नृपतिकुलीनः ।।११।।
भो भुवनेश्वरि पुण्ये धन्ये देवि द्रवमयि मुनिवरकन्ये।
गङ्गास्तवमिमममलं नित्यं पठति नरो यः स जयति सत्यम् ।।१२।।
येषां हृदये गङ्गाभक्तिः तेषां भवति सदा सुखमुक्तिः।
मधुरमनोहरपज्झटिकाभिः परमानन्दकलितकलाभिः ।।१३।।
गङ्गास्तोत्रमिदं भवसारं वाञ्छितफलदं विदितमुदारम्।
शङ्करसेवकशङ्कररचितं पठतु च विषयीदमिति समाप्तम् ।।१४।।

७९

# मोहमुद्गरः

श्रीशङ्कराचार्य-कृतः

मूढ़ ! जहीहि धनागमतृष्णां कुरु तनुबुद्धे मनसि वितृष्णाम् ।
यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥१॥
अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा कथिता नीतिः ॥२॥
का तव कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः ।
कस्य त्वं वा कुत आयातस्तत्त्वं चिन्तय तदिदं भ्रातः ॥३॥
मा कुरु धनजनयौवनगर्वं हरति निमेषात् कालः सर्वम् ।
मायामयमिदमखिलं हित्वा ब्रह्मपदं प्रविशाशु विदित्वा ॥४॥
नलिनीदलगतजलमतितरलं तद्वज्जीवनमतिशयचपलम् ।
विद्धि व्याधिव्यालग्रस्तं लोकं शोकहतञ्च समस्तम् ॥५॥
तत्त्वं चिन्तय सततं चित्ते परिहर चिन्तां नश्वरवित्ते ।
क्षणमिह सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका ॥६॥
अष्टकुलाचलसप्तसमुद्राः ब्रह्मपुरन्दरदिनकररुद्राः ।
न त्वं नाहं नायं लोकस्तदपि किमर्थं क्रियते शोकः ॥७॥
यावद्वित्तोपार्जनशक्तस्तावन्निजपरिवारो रक्तः ।
तदनु च जरया जर्जरदेहे वार्तां कोऽपि न पृच्छति गेहे ॥८॥
कामं क्रोधं लोभं मोहं त्यक्त्वात्मानं पश्य हि कोऽहम् ।
आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः ॥९॥
सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः ।
सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥१०॥
बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीरक्तः ।
वृद्धस्तावच्चिन्तामग्नः परमे ब्रह्मणि कोऽपि न लग्नः ॥११॥
शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं विग्रहसन्धौ ।
भव समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद् यदि विष्णुत्वम् ॥१२॥

यावज्जननं तावन्मरणं तावज्जननीजठरे शयनम् ।
इति संसारे स्फुटतरदोषः कथमिह मानव तव सन्तोषः ॥१३॥
दिनयामिन्यौ सायं प्रातः शिशिरवसन्तौ पुनरायातः ।
कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥१४॥
अङ्गं गलितं पलितं मुण्डं दन्तविहीनं जातं तुण्डम् ।
करधृतकम्पितशोभितदण्डं तदपि न मुञ्चत्याशाभाण्डम् ॥१५॥
त्वयि मयि सर्वत्रैको विष्णुर्व्यर्थं कुप्यसि मय्यसहिष्णुः ।
सर्वं पश्यात्मन्यात्मानं सर्वत्रोत्सृज भेदज्ञानम् ॥१६॥

८०

# हितोपदेशः

## ब्राह्मणशक्तुशरावकथा

अस्ति देवकोट्टनाम्नि नगरे देवशर्मा नाम ब्राह्मणः। तेन महाविषुवसंक्रान्तौ शक्तुपूर्णशरावः प्राप्तः। ततस्तमादाय असौ भाण्डपूर्णकुम्भकारमण्डपिकायां रौद्रेणाकुलितः शयितः। ततः शक्तुरक्षार्थं हस्ते दण्डमादाय अचिन्तयत्, 'यदि अहमिमं शक्तुशरावं विक्रीय दश कपर्दकान् प्राप्नोमि तदा अत्रैव तैः कपर्दकैर्घटशरावादिकम् उपक्रीय अनेकधा वृद्धैस्तैर्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय विक्रीय वाणिज्यं कृत्वा लक्षसंख्यकधनान्युत्पाद्य विवाहचतुष्टयं करोमि। तदनन्तरं सञ्जातेर्ष्यास्ता सपत्न्यः यदा अन्योऽन्यं द्वन्द्वं करिष्यन्ति, तदाहं कोपाकुलस्ताः सर्वा लगुडेन ताडयिष्यामि।' एवं चिन्तारतेन तेन लगुडः प्रक्षिप्तः। तेन शक्तुशरावश्चूर्णितो भाण्डानि च बहूनि भग्नानि। ततो भग्नभाण्डशब्दश्रवणादागत्य कुम्भकारेण गले हस्तं दत्वा ब्राह्मणस्तिरस्कृतो मण्डपिकाया बहिष्कृतश्च।

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति ।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा ॥

८१

## ब्राह्मणच्छागधूर्त्तत्रयकथा

अस्ति गौतमारण्ये प्रस्तुतयज्ञः कश्चित् ब्राह्मणः। स च यज्ञार्थं ग्रामान्तरं गत्वा छागमुपक्रीय स्कन्धे नीत्वा गच्छन् धूर्त्तत्रयेणावलोकितः। ततस्ते धूर्त्ताः—'यदि एष छागः केनापि उपायेन लभ्यते, तदा मतिप्रकर्षो भवति' इत्यालोच्य प्रान्तरवृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्य आगमनं प्रतीक्ष्य वर्त्मनि उपविश्य स्थिताः। तत्र एकेन धूर्त्तेन गच्छन् [illegible]

द्वितीयेन धूर्त्तेन [illegible]
भूमौ निधाय मुहुर्मुहुः निरीक्ष्य पुनः स्कन्धे कृत्वा दोलायमानमतिश्चलितः। तदनन्तरं पुनः तृतीयधूर्त्तवचनं श्रुत्वा स विप्रो भ्रमं निश्चित्य छागं त्यक्त्वा स्नात्वा गृहं ययौ। छागश्च नीत्वा धूर्त्तैः खादितः।

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम्।
स एव वञ्च्यते तेन ब्राह्मणश्छागतो यथा॥

८२

# मुद्राराक्षसम्

### सप्तमोऽङ्कः

## राक्षसेन चन्द्रगुप्तस्य अमात्यपदग्रहणम्

(प्रविशति चाणक्यराक्षससहितः चन्द्रगुप्तः)

चाणक्यः—अमात्य राक्षस! इष्यते चन्दनदासस्य जीवितम्?

राक्षसः—भो विष्णुगुप्त! कुतः सन्देहः?

चाणक्यः—अमात्य राक्षस! अगृहीतशस्त्रेण भवता अनुगृह्यते वृषलः इत्यतः सन्देहः। तद् यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते ततो गृह्यतामिदं शस्त्रम्।

राक्षसः—भो विष्णुगुप्त ! मा मैवम् । अयोग्या वयमस्य विशेषतस्त्वया गृहीतस्य ग्रहणे ।

चाणक्यः—अमात्य राक्षस ! योग्योऽहम् अयोग्यो भवान् इति कथमेतत् । अथवा किमनेन । न खलु भवतः शस्त्रग्रहणमन्तरेण चन्दनदासस्य जीवितमस्ति ।

राक्षसः—विष्णुगुप्त ! नमः सर्वकार्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय । का गतिः ? एष प्रह्वोऽस्मि ।

चाणक्यः—(सहर्षम्) वृषल ! वृषल ! अमात्यराक्षसेन इदानीम् अनुगृहीतोऽसि । दिष्ट्या वर्द्धते भवान् ।

राजा—आर्यप्रसाद एव चन्द्रगुप्तेनानुभूयते ।

पुरुषः—(प्रविश्य) जयत्वार्यः । एष खलु भद्रभटभागुरायणप्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूमिम् उपस्थितः । इदं श्रुत्वा आर्यः प्रमाणम् । [जेदु अज्जो । एष क्खु भद्दभटभाउराअणप्पमुहेहिं संजमिदकलचलणो मलअकेदु पडिहारभूमिं उवट्ठिदो । एदं सुणीअ अज्ज प्पमाणम् ।]

चाणक्यः—भद्र ! निवेद्यताममात्यराक्षसाय । सोऽयमिदानीं जानीते ।

राक्षसः—(स्वगतम्) दासीकृत्य मामिदानीं विज्ञापनायां मुखरीकरोति कौटिल्यः । का गतिः ? (प्रकाशम्) राजन् चन्द्रगुप्त ! विदितमेव ते यथा वयं मलयकेतौ कञ्चित्कालमुषिताः तत्र परिरक्ष्यन्तामस्य प्राणाः ।

राजा—(चाणक्यमुखमवलोकयति ।)

चाणक्यः—प्रतिमानयितव्यः अमात्यराक्षसस्य प्रथमः प्रणयः । (पुरुषं प्रति) भद्र ! अस्मद्वचनादुच्यन्तां भद्रभटप्रमुखाः, यथा अमात्यराक्षसेन विज्ञापितो देवश्चन्द्रगुप्तः, प्रयच्छति मलयकेतवे पित्र्यमेव विषयम् । अपरञ्च वक्तव्यो दुर्गपालः, अमात्यराक्षसलाभेन सुप्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति य एष श्रेष्ठी चन्दनदासः स पृथिव्यां सर्वनगरश्रेष्ठिपदमारोप्यताम् इति । अपि च—

विना वाहनहस्तिभ्यो मुच्यतां सर्वबन्धनम् ।
पूर्णप्रतिज्ञेन मया केवलं बध्यते शिखा ॥

पुरुष:—यदार्यः आज्ञापयति। [जं अज्जो आणवेदि] (इति निष्क्रान्तः)

चाणक्य:—भो राजन् चन्द्रगुप्त! भो अमात्य राक्षस! उच्यतां किं वा भूयः प्रियमुपहरामि।

राजा—किमतः परमपि प्रियमस्ति?

राक्षसेन समं मैत्री राज्ये चारोपिता वयम्।
नन्दाश्चोन्मूलिताः सर्वे किं कर्तव्यमतः प्रियम्।।

८३

# चण्डकौशिकम्

## विश्वामित्रहरिश्चन्द्र-संवादः

विश्वामित्र:—(सक्रोधम्) अये कथमसौ दुरात्मा हरिश्चन्द्रः अस्माकं श्रेयसामन्तरायः संवृत्तः। तिष्ठ रे क्षत्रियाधम! तिष्ठ।

राजा—(ससम्भ्रममात्मगतम्) अये कथं स भगवान् कौशिकोऽयम्। नूनमसमीक्ष्यकारिणा मयात्र इन्धनेनेव स्फुरच्छिखाकलापो ज्वलन एव पद्भ्यामाक्रान्तः।

विश्वामित्र:—प्रारब्धसाधनविघातविवृद्धमन्योः
शापाय धावति करो मम दक्षिणोऽयम्।
जातिं स्मरन्नपि चिराय समुज्झितां तां
सव्योऽपरस्तु मम चापमुपैति पाणिः।।

राजा—(ससम्भ्रममुपसृत्य) भगवन् अभिवादये।

(कौशिकः क्रोधं नाटयति)

राजा—(पादयोर्निपत्य) भगवन् मर्षय मर्षय! अविजानतो मे क्षन्तुमर्हसि।

विश्वामित्रः—दुरात्मन्! किं नाम अविजानतो क्षन्तुमर्हसि। अरे रे क्षुद्र! न किल नाम भवतोऽहं विदितः।

दृप्यद् वसिष्ठसुतकाननधूम्रकेतुम्
जातिस्वयंग्रहणदुर्ललितैकविभ्रम्।
स्वर्गान्तराहरणभीतजगत्कृतान्तं
चण्डालयाजिनमवैषि न कौशिकं माम्॥

राजा—भगवन्! प्रसीद प्रसीद। नैवमवगन्तुमर्हसि। स्वधर्माक्षिप्तचेतसस्त्वामविजानतो मे क्षन्तुमर्हसीति विज्ञापयामि।

विश्वामित्रः—दुरात्मन्! कथय कथय, कश्चेत् ते धर्मः।

राजा—भगवन्।

दातव्यं रक्षितव्यं च योद्धव्यं क्षत्रियैरिति।
गीतः पुराणैर्मुनिभिरेष धर्मः सनातनः॥

विश्वामित्रः—कथय कस्मै दातव्यम्; कश्च रक्षणीयः; केन सह योद्धव्यम्।

राजा—भगवन् श्रुयताम्। गुणवद्भ्यो द्विजातिभ्यो देयम्। रक्ष्या भयार्दिताः। अरातिभिश्च योद्धव्यम्।

विश्वामित्रः—दुरात्मन्! यद्येवं मन्यसे तदा दीयतामस्मभ्यं विद्यातपोऽनुरूपं किञ्चित्।

राजा—(सहर्षम्) ननु अनुगृहीतस्तर्हि भगवता वैवस्वतो वंशः। तत् प्रसीद, भगवन् प्रसीद।

नार्हन्ति सर्वभुवनान्यपि दक्षिणायै
सर्वस्वदानविनिवेदन-कुण्ठशक्तिः।
पूर्णां धनैः कुशिकनन्दन! तुभ्यमद्य
कृत्स्नामिमां वसुमतीं विनिवेदयामि॥

विश्वामित्रः—(साश्चर्य्यमात्मगतम्) भवत्वेवं तावत्। (प्रकाशम्) राजन् स्वस्ति। किन्तु नादक्षिणं दानमामनन्ति। तदर्हसि दक्षिणां दातुमिदानीम्।

राजा—(सव्रीड़मात्मगतम्) किमत्र प्रतिपत्तव्यम्। (चिरं विचिन्त्य सहर्षम्) भवत्वेवं तावत्। (प्रकाशम्) भगवन् समुपहृत्य दास्यामि हेम्ना लक्षञ्च दक्षिणाम्। अद्य प्रभृति मे मासमवधिं क्षन्तुमर्हसि॥

विश्वामित्रः—अनुमतोऽयमवधिः। किन्तु परिहृत्य वसुमतीम् अन्यतः समुपाहृत्य दातव्यम्।

राजा—(साशङ्कमात्मगतम्) कथमत्र प्रतिविधेयम्। (विचिन्त्य सहर्षम्) लब्धं प्रतिविधानं, यतोऽस्ति किल भगवतः शिवस्य परिग्रहः परं क्षेत्रं वाराणसीति। वसुधातलभोगभिन्नां याम् मुनयोऽन्तरीक्षनगरीं वदन्ति। तत आहृत्य दास्ये। (प्रकाशम्) भगवन् यदादिशसि। दिष्ट्या फलितमिदानीम् आयासभूयिष्ठेनापि मे राज्यभारेण। भगवन् इतोऽयोध्यां गत्वा कृतकृत्यो निर्वर्त्य दक्षिणोपार्जनाय वाराणसीमेव गच्छामि। तदाज्ञापयितुमर्हसि।

विश्वामित्रः—(साश्चर्य्यमात्मगतम्) अहो दुरात्मनः स्थैर्य्य महानुभावता च। तथाहि;—

पश्यामि यावच्चलितं न सत्याद्
राज्यादिव स्वाद् अचिराद्भवन्तम्।
त्वद्दर्णयोद्दीपिततीव्रतेजा—
स्तावन्न मे शान्तिमुपैति मन्युः॥

(प्रकाशम्) राजन्! एवमस्तु को दोषः।

८४

# श्रीमद्भागवतम्

### सप्तमः स्कन्धः

### चतुर्दशोऽध्यायः

## गृहस्थकर्त्तव्यम्

गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः।
वासुदेवार्पणं साक्षादुपासीत महामुनीन्॥१॥
शृण्वन् भगवतोऽभीक्ष्णमवतारकथामृतम्।
श्रद्धधानो यथाकालमुपशान्तजनावृतः॥२॥

सत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु ।
विमुच्येन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ।।३।।
यावदर्थमुपासीनो देहे गेहे च पण्डितः ।
विरक्तो रक्तवत् तत्र नृलोके नरतां न्यसेत् ।।४।।
ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ।
यद्वदन्ति यदिच्छन्ति चानुमोदेत निर्ममः ।।५।।
दिव्यं भौमं चान्तरीक्षं वित्तमच्युतनिर्मितम् ।
तत् सर्वमुपभुञ्जान एतत् कुर्य्यात् स्वतो बुधः ।।६।।
यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ।।७।।
मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः ।
आत्मनः पुत्रवत् पश्येत् तैरेषामन्तरं कियत् ।।८।।
त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ।
यथादेशं यथाकालं यावद्दैवोपपादितम् ।।९।।
जह्याद् यदर्थे स्वप्राणान् हन्याद् वा पितरं गुरुम् ।
तस्यां स्वत्वं स्त्रियां जह्याद् यस्तेन ह्यजितो जितः ।।१०।।
कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क्व तदीयरतिर्भार्य्या क्वायमात्मा नभश्छदिः ।।११।।
सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद् वृत्तिमात्मनः ।
शेषे स्वत्वं त्यजन् प्राज्ञः पदवीं महतामियात् ।।१२।।
देवानृषीन् नृभूतानि पितृनात्मानमन्वहम् ।
स्ववृत्यागतवित्तेन यजेत पुरुष पृथक् ।।१३।।
अथ देशान् प्रवक्ष्यामि धर्मादिश्रेय-आवहान् ।
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ।।१४।।
विम्बं भगवतो यत्र सर्वमेतच्चराचरम् ।
यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम् ।।१५।।
यत्र यत्र हरेर्चा स देशः श्रेयसां पदम् ।
यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ।।१६।।
सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ।
कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ।।१७।।

नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली ।
वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा ।।१८।।
नारायणाश्रमो नन्दा सीतारामाश्रमादयः ।
सर्वे कुलाचला राजन् महेन्द्रमलयादयः ।।१६।।
एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये ।
एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ।।२०।।

८५

# त्रिविक्रमभट्टविरचिता नलचम्पूः

### पञ्चम उच्छ्वासः

## ब्राह्मणदमयन्ती-संवादः

कदाचित्तु अवलोक्य यौवनावस्थां दमयन्त्याः 'काऽस्याः किलानुरूपः पतिर्भवेत्' इति चिरं चिन्ताकुलो विदर्भेश्वरः स्वयं स्वयंवरधर्मप्रारम्भाय समं मन्त्रिभिर्मन्त्रनिश्चयं चकार। न चिराच्च प्राच्यप्रतीच्योदीच्यदाक्षिणात्यनरपतिनिमन्त्रणे प्रगल्भप्रायान् प्रधानप्रेष्यान् प्रेषयामास। प्रस्थितं कञ्चिदुदीच्यनरपतिनिमन्त्रणाय प्रवृद्धवृद्धब्राह्मणम् आप्तसखीमुखेन दमयन्ती श्लिष्टार्थमिदमवादीत्।

भूपालामन्त्रणे तात! तथा सञ्चार्य्यतां यथा।
नलोप्यागमबुद्धिः स्यात् प्रार्थ्यसे किमतःपरम् ।।

सोऽप्यवगतश्लोकार्थस्तथाविधमेव प्रत्युत्तरमदात्।

'केनापि व्यवहारेण कयापि प्रौढलीलया।
करिष्याम्यागमस्यार्थे रभसेन न लङ्घनम् ।।

तदायुष्मति! सुखमास्ताम्, इत्यभिधाय गतवान्। अथ नाचिरेण आगतस्तया सह रहः समाहूय स ब्राह्मणः सोमशर्मा नर्मालापलीलया दमयन्त्या बभाषे।

आहूतोदीच्यभूपेन तातादेशविधायिना।
नालोकापि त्वया वार्त्ता विद्वन्नावेदिता मम ।।

सोऽपि 'एष कथयामि श्लेषोक्तिकुशले, श्रूयताम्' इत्यभिधाय विहसन्नाख्यातुमारब्धवान्। 'इतो निर्गत्य मया मण्डलेश्वरामन्त्रणक्रमेण परिभ्रमता निषधनाम्नो महीध्रस्य दक्षिणारण्यस्थलीषु मृगयासक्तः एकः कोऽपि मनोहरः पथि युवा दृष्टः स यस्मिन् सकृद्दृष्टे नष्टनिमेषया मम दृशा लब्धं फलं जन्मनः। तेनापि 'दाक्षिणात्योऽयम्' इति निश्चित्य साभिलाषमाभाषितोऽस्मि। मयापि उक्तम्।

यथेयमाकृतिर्लोकलोचनानन्ददायिनी।
तव भद्र! तथासत्यागोऽसि नलो भवान्॥

एवमुक्तः सोऽपि मनाङमुग्धस्मितमेवोत्तरं कल्पितवान्।

अथ प्रथमवयोविभूषिताङ्गः तुङ्गतुरङ्गमारूढः कश्चिद् युवा तमव देशमागतवान्। आगत्य च इदमब्रवीत्। युवराज! पश्य

नद्यास्तीरे विदर्भायाः कापि गोपालवालिका।
गाः समुच्चारयत्येषा क्षेत्रीकृत्य नलं वरम्॥

एतदाकर्ण्य मयाप्युक्तम् 'महानुभाव! न केवलमियमन्यापि क्वापि कापि' इति। इत्युक्तवन्तं मामवलोक्य भावितार्थः स पुनः सस्मितमवोचत्, 'अध्वन्य! कथय कुतः प्रष्टव्योऽसि, किञ्च कियद्वाद्यापि वर्त्मातिक्रमितव्यम्'।

अथ कथितस्ववृत्तान्तेन मयापि 'कोऽयम् अशेषमनुष्यमस्तकमणिः कश्च भवानपि' इति पर्य्यनुयुक्तः स पुनरुक्तवान्, 'अयमसौ सौम्य! समस्तशस्त्रशास्त्रकोविदो विदारितवैरी वैरसेनिर्नलः। किमन्यदहमपि श्रुतशीलनामास्यैवाज्ञाकारी' इत्यभिधाय विश्रान्तवान्।

नलोऽपि समर्थ्य च स्वयंवरामन्त्रणम् उत्सुकतया तत्कालमेवोड्डीय गन्तुमीहमानः संभाषितेन स्मितेन आलोकितेन च माममृतवर्षेणेव आह्लादयन् व्यसर्जयत्।

'तदायुष्मति! स्वामिसुते! निश्चितमचिरादयम् एष्यति' इत्यभिधाय स ब्राह्मणः स्वगृहमगात्।

# कूर्म-पुराणम्

## पूर्वभागः

### सप्तदशोऽध्यायः

### वामनावतारवर्णनम्

स तस्य पुत्रो मतिमान् बलिर्नाम महासुरः ।
ब्रह्मण्यो धार्मिकोऽत्यर्थं विजिग्येऽथ पुरन्दरम् ॥१॥
कृत्वा तेन महद्युद्धं शक्रः सर्वामरैर्वृतः ।
जगाम निर्जितो विष्णुं देवं शरणमच्युतम् ॥२॥
तदन्तरेऽदितिर्देवी देवमाता सुदुःखिता ।
दैत्येन्द्राणां बधार्थाय पुत्रो मे स्यादिति स्वयम् ॥३॥
तताप सुमहाघोरं तपोराशिं ततः परम् ।
प्रपन्ना विष्णुमव्यक्तं शरण्यं शरणं हरिम् ॥४॥
प्रसन्नो भगवान् विष्णुः शङ्खचक्रगदाधरः ।
आविर्बभूव योगात्मा देवमातुः पुरो हरिः ॥५॥
प्रणम्य शिरसा भूमौ सा वव्रे वरमुत्तमम् ।
त्वामेव पुत्रं देवानां हिताय वरये वरम् ॥६॥
तथास्त्वित्याह भगवान् प्रपन्नजनवत्सलः ।
दत्त्वा वरानप्रमेयस्तत्रैवान्तरधीयत ॥७॥
ततो बहुतिथे काले भगवन्तं जनार्दनम् ।
दधार गर्भं देवानां माता नारायणं स्वयम् ॥८॥
काले प्राप्ते महाविष्णुं देवानां हर्षवर्द्धनम् ।
असूत कश्यपाच्चैनं देवमातादितिः स्वयम् ॥९॥
कृतोपनयनो वेदानध्यैष्ट भगवान् हरिः ।
सदाचारं भरद्वाजात् त्रिलोकाय प्रदर्शयन् ॥१०॥
ततः कालेन मतिमान् बलिर्वैरोचनिः स्वयम् ।
यज्ञैर्यज्ञेश्वरं विष्णुमर्चयामास सर्वगम् ॥११॥

ब्राह्मणान् पूजयामास दत्त्वा बहुतरं धनम् ।
ब्रह्मर्षयः समाजग्मुर्यज्ञवाटं महात्मनः ॥१२॥
विज्ञाय विष्णुर्भगवान् भरद्वाजप्रचोदितः ।
आस्थाय वामनं रूपं यज्ञदेशमथागमत् ॥१३॥
कृष्णाजिनोपवीताङ्गमाषाढेन विराजितः ।
ब्राह्मणो जटिलो वेदानुद्गिरन् सुमहाद्युतिः ॥१४॥
सम्प्राप्यासुरराजस्य समीपं भिक्षुको हरिः ।
त्रिपादैर्विमितं देशमयाचत बलिं त्रिभिः ॥१५॥
प्रक्षाल्य चरणौ विष्णोर्बलिर्भावसमन्वितः ।
आचामयित्वा भृङ्गारमादाय स्वर्णनिर्मितम् ॥१६॥
दास्ये तवेदं भवते पदत्रयं प्रीणातु देवो हरिरव्ययाकृतिः ।
विचिन्त्य देवस्य कराग्रपल्लवे निपातयामास सुशीतलं जलम् ॥१७॥
विचक्रमे पृथिवीमेष चैताम् अथान्तरीक्षं दिवमादिदेवः ।
व्यपेतरागं दितिजेश्वरं तं प्रकर्त्तुकामः शरणं प्रपन्नम् ॥१८॥
आलोक्य तं पुरुषं विश्वकायं महान् बलिर्भक्तियोगेन विष्णुम् ।
ननाम नारायणमेकमव्ययं स्वचेतसा यं प्रणमन्ति वेदाः ॥१९॥
तमब्रवीद् भगवानादिकर्त्ता भूत्वा पुनर्वामनो वासुदेवः ।
ममैव दैत्याधिपतेऽधुनेदं लोकत्रयं भवता भावदत्तम् ॥२०॥
प्रणम्य मूर्ध्ना पुनरेव दैत्यो निपातयामास जलं कराग्रे ।
दास्ये तवात्मानमनन्तधाम्ने त्रिविक्रमायामितविक्रमाय ॥२१॥
प्रगृह्य सूनोरपि सम्प्रदत्तं प्रह्लादसूनोरथ शङ्खपाणिः ।
जगाद वश्यं जगदन्तरात्मा पातालमूलं प्रविशेति भूयः ॥२२॥
समास्यतां भवता तत्र नित्यं भुक्त्वा भोगान् देवतानामलभ्यान् ।
ध्यायस्व मां सततं भक्तियोगात् प्रवेक्ष्यसे कल्पदाहे पुनर्माम् ॥२३॥
उक्त्वैवं दैत्यसिंहं तं विष्णुः सत्यपराक्रमः ।
पुरन्दराय त्रैलोक्यं ददौ जिष्णुरुरुक्रमः ॥२४॥
कृत्वैतदद्भुतं कर्म विष्णुर्वामनरूपधृक् ।
पश्यतामेव सर्वेषां तत्रैवान्तरधीयत ॥२५॥

# यवद्वीपराजस्य एलङ्गदेवस्य प्रशस्तिः

त्रिभिरपि गुणैरुपेतो नृणां विधाने स्थितौ तथा प्रलये ।
अगुण इति यः प्रसिद्धस्तस्मै धात्रे नमः सततम् ।।१।।
अगणितविक्रमगुरुणा प्रणम्यमानः सुराधिपेन सदा ।
अपि यस्त्रिविक्रम इति प्रथितो लोके नमस्तस्मै ।।२।।
यः स्थाणुरप्यतित्वरो यथेप्सितार्थप्रदो गुणैर्जगताम् ।
कल्पद्रुममतनुमधः करोति तस्मै शिवाय नमः ।।३।।
कीर्त्त्या खण्डितया धिया करुणया यः स्त्रीपरत्वं दध-
 च्चापकर्षणतश्च यः प्रणिहितं तीव्रं कलङ्कं करे ।
यश्चासच्चरिते पराङ्मुखतया शूरो रणे भीरुतां
 स्वैर्दोषान् भजते गुणैः स जयतादेर्लङ्गनामा नृपः ।।४।।
आसीन्निर्जितभूरिभूधरगणो भूपालचूडामणिः
 प्रख्यातो भुवनत्रयेऽपि महता शौर्य्येण सिंहोपमः ।
येनोर्वी सुचिरं धृतामितफला लक्ष्मीं दधौ गत्वरीं
 स कीर्तिबलान्वितो यवपतिः श्रीशानतुङ्गाह्वयः ।।५।।
तस्यात्मजाकलुषमानसवासरम्या
 हंसी यथा सुगतपक्षसहाभवद् या ।
सा राजहंसमुदमेव विवर्द्धयन्ती
 श्रीशानतुङ्गविजयेति रराज राज्ञी ।।६।।
मन्दाकिनीमिव तदात्मसमां समृद्ध्या
 क्षीरार्णवः प्रथितशुद्धिगुणान्तरात्मा ।
ताञ्चाकरोत् प्रणयिनीं नयनाभिनन्दी
 श्रीलोकपालनृपतिर्नरनाथनागः ।।७।।
तस्मात् प्रादुरभूत् प्रभावविशदो भूभूषणोद्भूतये
 भूतानां भवभावनोद्यतधिया क्ष्मां भावयन् भूतिभिः ।
शौरिश्चाप्रतिमप्रभाभिरभयो भास्वानिवाभ्युद्यतः
 शत्रूणामिभकुम्भकुम्भदलने पुत्रः प्रभुर्भूभुजाम् ।।८।।

श्रीमकुटवंशवर्द्धन इति प्रतीतो नृणामनुपमेन्द्रः ।
श्रीशानवंशतपनस्तताप शुभ्रं प्रतापेन ॥९॥
तस्याधिपस्य दुहितातिमनोज्ञरूपा
मूर्त्तेव भावगुणतो यवराजलक्ष्मीः ।
द्वीपान्तरेऽपि सुभगेन बभूव पित्रा
नाम्ना कृता खलु गुणप्रियधर्मपत्नी ॥१०॥
आसीदसावपि विशिष्टविशुद्धजन्मा
राजान्वयादुदयनः प्रथितात् प्रजातः ।
तां श्रीमतीं विधिवदेव महेन्द्रदत्तां
व्यक्ताह्वयो नृपसुतामुपयच्छते स्म ॥११॥
श्रेष्ठः प्रजासु सकलासु कलाभिरामो
रामो यथा दशरथात् स्वगुणैर्गरीयान् ।
सम्भावितोन्नतगतिर्महसा मुनीन्द्रैर्
एर्लङ्गदेव इति दिव्यसुतस्ततोऽभूत् ॥१२॥
श्रीधर्मवंश इति पूर्वयवाधिपेन
सम्बन्धिना गुणगणश्रवणोत्सुकेन ।
आहूय सादरमसौ स्वसुताविवाहं
द्राक् सर्वथा प्रथितकीर्त्तिरभून्महात्मा ॥१३॥
शाकेन्द्रेऽथ विलोचनाग्निवदने याते महावत्सरे
माघे मासि सितत्रयोदशतिथौ वारे शशिन्युत्सुकैः ।
आगत्य प्रणतैर्जनैर्द्विजवरैः साश्वासमभ्यर्थितः
श्रीलोकेश्वरनीरलङ्गनृपतिः पाहीत्युदन्तां क्षितिम् ॥१४॥
साम्राज्यदीक्षितमिमं नृपतिं निशम्य
शक्त्या जितारिनिकरं निवहो रिपूणाम् ।
अद्यापि तद्भुजभुजङ्गतलस्य विभ्य-
दभ्यसतीव चपलत्वमभूतपूर्वम् ॥१५॥
भूयांसो यवभूभुजो बुभुजिरे पृथ्वीं विपक्षार्थिनः
सामर्थ्यान्नृपजन्मनोनुबुभुजुस्तदा नरेन्द्रासने ।
तिक्तं श्रीजलङ्गदेवनृपतिर्वश्योधिनाथाग्रणी-
र्भो अङ्के स भुनक्ति केवलमरिन्द्रन्द्वम्भ्रमन्भूतले ॥१६॥

भूभृन्मस्तकसक्तपादयुगलः सिंहासने संस्थितो
मन्त्रालोचनतत्परैरहरहः सम्भाषितो मन्त्रिभिः।
भास्वद्भिर्ललनान्वितो निविशते वीरैः परितो भृशं
ज्योतिस्तस्य पराजये विजयवच्चित्रीयते सन्ततम् ।।१७।।
अभवदपि भुवि स्त्री राक्षसीवोग्रवीर्य्या
व्यपगतभयमस्याः सङ्कटाङ्गामयासीत् ।
जलनिधिशररन्ध्रे शाकसंवत्सरेऽस्मिन्
नृपतिरभिनदेतल्लक्षणं ख्यातकीर्त्तिः १८।।
ज्वलन इव नगेन्द्रो लेलिहानोदहत्ता-
न्दिशमधिकमनार्य्यां दक्षिणां दक्षिणत्वात् ।
धनमतिबहुलुण्ठं तच्च दत्त्वात्मभृत्ये
द्विजपतिमुनिमध्ये कीर्तिमेवाहरत् सः ।।१९।।
मानित्वादथ शैलभूतलपने शाकेन्द्रवर्षे गते
भाद्रे मासि सितत्रयोदशतिथौ वारे बुधे पावने।
उद्यक्तैर्बलिभिर्बलैरगणितैर्गत्वा दिशं पश्चिमां
राजानं विजयाह्वयं समजयत् राजा जगत्पूजितः ।।२०।।
मुखशरविवराख्ये शाकराजस्य वर्षे
हतशशिगुरुवारे कार्त्तिके पञ्चदश्यां
रिपुशिरसि महात्मा श्रीयवद्वीपराजो
जयति निहितपादो रत्नसिंहासनस्थः ।।२१।।
पूर्वादिदिग्विजयिनं हतसर्वशत्रु-
मेकातपत्रमवनेर्जललङ्गदेवम् ।
नान्यं निरीक्षितुमलं सभुजोपपीडं
गाढं परिष्वजति सम्प्रति राजलक्ष्मीः ।।२२।।
निर्जित्याथ रिपुन् पराक्रमधनाञ्छौर्य्यैरुपायैरपि
शक्त्याखण्डितया खलु व्रतितया वा देवताराधनैः।
रन्तुं जातमहानृपः स कुरुते पुण्याश्रमं श्रीमतः
पार्श्वे पूगवतो गिरेर्नरपतिः श्रीनीरलङ्गाह्वयः ।।२३।।

---

Inscription of king Erlangga of Java found at Penang-Gungen (Surabaya) dated 963 Śaka

# बृहत्कथामञ्जरी

## क्षेमेन्द्रकृता

### प्रथमलम्बकम्

### बृहत्कथारचना

माल्यवान् पार्वतीशापादवतीर्य्य महीतलम् ।
अमात्यः सुचिरं भूत्वा शातवाहनभूपतेः ॥१॥
गुरुर्गुणवतां लोके गुणाढ्य इति विश्रुतः ।
काणभूतिं समासाद्य वृत्तान्तं निजमब्रवीत् ॥२॥
शातवाहनभूपालं द्रष्टुं यातोऽस्मि तत्पुरम् ।
ररक्ष वसुधां धन्वी धैर्य्यभूः शातवाहनः ॥३॥
स कदाचिद् वरोद्याने विमाने पुष्पधन्वनः ।
वसन्ते कामिनीकान्तो जलकेलिरतोऽभवत् ॥४॥
(तत्रैका महिषी राज्ञा हता सावेगमम्बुना ।
मा मोदकेन राजेन्द्र ताडयेत्यभ्यधान्नृपम्) ॥५॥
श्रुत्वेति मूर्खो भूपालः क्षिप्रमाहृतमोदकः ।)
मा वारिणेति देव्यास्तद्वचो श्रुत्वा ह्रियं ययौ ॥६॥
(शब्दज्ञाभिर्देवीभिर्भृत्यैश्च श्रुतशालिभिः ।)
सान्तर्हासं मनागृदृष्टो बभूव भृशखेदितः ।)॥७॥
सोऽथ शोकाग्निसन्तप्तः समुत्सारितसेवकः ।
अविज्ञातामयोऽविद्यैस्तस्थौ मौनी दिवानिशम्) ॥८॥
कालेन शर्ववर्माख्यो मन्त्री सह मया नृपम् ।
प्रोवाच राजन्नस्थाने कोऽयं शोकग्रहस्तव ॥९॥
स्वयं शिक्षितया किं ते विद्यया चक्रवर्त्तिनः ।
विबुधास्त्वां निषेवन्ते पश्य शक्रमिवेश्वरम् ॥१०॥
अथाहमवदं ध्यात्वा गुणाढ्योऽहं यथार्थवाक् ।
पण्डितं त्वां विधास्यामि पञ्चभिर्वत्सरैरिति ॥११॥

ततोऽब्रवीच्छर्ववर्मा मासैः षड्भिर्बहुश्रुतम् ।
अहं नृपं करिष्यामि विश्राम्यन्तु भवद्विधाः ।।१२।।
इति श्रुत्वा विहस्याहं कुपितस्तारमभ्यधाम् ।
भाषात्रये भविष्यामि मौनी पारंगते त्वयि ।।१३।।
शर्ववर्माब्रवीदस्मि वोढा द्वादश वत्सरान् ।
त्वत्पादुके प्रतिज्ञैषा यदि मे न फलिष्यति ।।१४।।
प्रतिज्ञायेति तपसा विलोक्य वरदं गुहम् ।
स कातन्त्रेण नृपतिं मासैश्चक्रे बहुश्रुतम् ।।१५।।
ततः पराजितो मौनी नृपेण स्थातुमर्थितः ।
शिष्याभ्यां सहितो दुःखाद् यातोऽहं दिशमुत्तराम् ।।१६।।
ज्ञात्वा देवीप्रसादेन त्यक्तभाषात्रयाप्यहम् ।
पैशाचीमनपभ्रंश-संस्कृत-प्राकृता श्रितः ।।१७।।
श्रुत्वा गुणाढ्य-कथितं काणभूतिरुवाच तम् ।
शोणितेन लिख क्षिप्रं सप्तानां चक्रवर्त्तिनाम् ।।१८।।
कथा विद्याधरेन्द्राणां कथयामि स्थिरा भव ।
इति श्रुत्वा लिलेखाशु सप्त लक्षाण्यनन्यधीः ।।१९।।
प्राहिणोत्ता लिखित्वा च शातवाहनभूभुजे ।
स च लक्ष्मीमदोन्मत्तो नामन्यत विशृङ्खलः ।।२०।।
पैशाची वाग् मषी रक्तं मौनोन्मत्तश्च लेखकः ।
इति राजाब्रवीत् का वा वस्तुसारविचारणा ।।२१।।
(बुद्ध्या त्यजन्त्यनासाद्य मूर्खाश्चर्वणक्षमाः ।)
श्रोतारो नाप्रसिद्धेषु रजतां क्व सुभाषिताम् ।।२२।।
अवमानावधूतां ता कृत्वा मौनी बृहत्कथाम् ।
व्याख्याय शिष्यसहितो गुणाढ्योऽवाचयत् स्वयम् ।।२३।।
जुहावाग्नौ महाकोपः पत्रं पत्रमनारतम् ।
तस्मिन् व्याख्यातरि कथां निःशेषमृगपक्षिणः ।।२४।।
त्यक्ताहाराः समभ्येत्य शुश्रुवुः साश्रुलोचनाः ।
ततस्तच्छुष्कमांसाशी नृपतिर्भृशमातुरः ।।२५।।
विवेद लुब्धकगिरा मृगाणां शोषकारणम् ।
द्रष्टुं सुमहदाश्चर्य्यमाययौ शातवाहनः ।।२६।।

लक्ष्मैकशेषामासाद्य ततो राजा बृहत्कथाम् ।
शुशोच चर्वणासक्तप्रेक्षमाणः पदं पदम् ॥२७॥
श्रुत्वा गुणाढ्यादखिलं वृत्तान्तं कौतुकाकुलः ।
ययौ तच्छिष्यसहितः समादाय नृपः कथाम् ॥२८॥
गुणाढ्योऽपि परिज्ञानवह्निनिर्दग्धविग्रहः ।
माल्यवत्पदमासाद्य विजहार हरप्रियः ॥२९॥

८९

# कथासरित्सागरः

## मूर्खाणां कथा

## मूढभ्रातृद्वयकथा

### (१)

इदं च श्रूयतामन्यन्मालवे भ्रातरावुभौ ।
विप्रावभूतामद्वैवं तयोः पित्र्यमभूद्धनम् ॥१॥
विभज्यमाने चार्थेऽस्मिन् न्यूनाधिकविवादिनौ ।
स्थेयीकृत उपाध्यायश्छान्दसस्तावभाषत ॥२॥
वस्तु वस्तु समे द्वे द्वे अर्द्धे कृत्वा विभज्यताम् ।
युवाभ्यां येन नैव स्यान्न्यूनाधिककृतः कलिः ॥३॥
तच्छ्रुत्वा वेश्मशय्यादिभाण्डं सर्वं पशूनपि ।
एकमेकं द्विधा कृत्वा मूढौ विभजतः स्म तौ ॥४॥
एका दासी तयोरासीत् सापि ताभ्यां द्विधा कृता ।
तद्बुद्ध्वा दण्डितौ राज्ञा सर्वस्वं तावुभावपि ॥५॥

## ६०

# सुवर्णमुग्धकथा

## (२)

अयं सुवर्णमुग्धस्य देवेदानीं निशम्यताम् ।
पुमान् कश्चिज्जलं पातुं तड़ागमगमद् युवा ॥६॥
स जड़ोऽनोकहस्थस्य स्वर्णचूड़स्य पक्षिणः ।
सुवर्णवर्णं तत्राम्भस्यपश्यत् प्रतिविम्बकम् ॥७॥
सुवर्णमिति मत्वा तद् ग्रहीतुं प्रविवेश तम् ।
तड़ागं न च तत् प्राप दृष्टनष्टं चले जले ॥८॥
आरुह्यारुह्य जले स तत् पश्यन् प्रविश्य तत् ।
पुनः पुनस्तड़ागाम्भो जिघृक्षुर्नापि किञ्चन ॥९॥
पित्राथ स्वेन दृष्टोऽथ पृष्टो निन्ये गृहं जड़ः ।
तां दृष्ट्वा प्रतिमां तोये खगं विद्राव्य बोधितः ॥१०॥
निर्विमर्शा मृषाज्ञानैर्मुह्यन्त्येवमवुद्धयः ।
उपहास्याः परेषां च शोच्याः स्वेषां भवन्ति च ॥११॥

## ६१

# मूर्खभृत्यकथा

## (३)

अयं चान्यो महामूर्खवृत्तान्तोऽत्र निशम्यताम् ।
कस्याप्युष्ट्रोऽवसन्नोऽभूद् भारेण वणिजोऽध्वनि ॥१२॥
स भृत्यान् अब्रवीत् कञ्चिदुष्ट्रं गत्वान्यमानये ।
क्रीत्वाहं योऽस्य करभस्यार्द्धं भारादितो हरेत् ॥१३॥
मेघागमे यथा वस्त्रपेटास्वेतासु न स्पृशेत् ।
अम्भश्चर्माणि युष्माभिस्तथा कार्य्यमिह स्थितैः ॥१४॥

इत्युष्ट्रपार्श्वेऽवस्थाप्य भृत्यांस्तस्मिंस्ततो गते ।
वणिज्यकस्मादुन्नम्य प्रारेभे वर्षितुं घन: ।।१५।।
तथा कार्य्यं यथा नाम्भ: पेटाचर्माणि संस्पृशेत् ।
इति न: स्वामिना प्रोक्तमित्यालोच्याथ ते जड़ा: ।।१६।।
कृष्ट्वा वस्त्राणि पेटाभ्यस्तैस्ते तान्यभ्यवेष्टयन् ।
चर्माणि तेन वस्त्राणि विनेशुस्तेन वारिणा ।।१७।।
पापा: किमत्र सकलो वस्त्रौघो नाशितोऽम्भसा ।
इत्यागतोऽथ स वणिक् क्रुद्धो भृत्यानभाषत ।।१८।।
त्वयैवादिष्टमुदकात् पेटाचर्माभिरक्षणम् ।
दोषस्तत्र च कोऽस्माकमिति तेऽपि तमभ्यधु: ।।१९।।
चर्मस्वाद्रेषु नश्यन्ति वस्त्राणीति मयोदितम् ।
वस्त्राणामेव रक्षार्थमुक्तं वो न तु चर्मणाम् ।।२०।।
इत्युक्त्वा चान्यकरभन्यस्तभारो वणिक् तत: ।
स गत्वा स्वगृहं भृत्यान् सर्वस्वं तानदण्डयत् ।।२१।।
एवमज्ञातहृदया मूर्खा: कृत्वा विपर्य्ययम् ।
घ्नन्ति स्वार्थं परार्थं च तादृग् ददति चोत्तरम् ।।२२।।

९२

## अपूपिकामुग्धकथा

(४)

अयं चापूपिकामुग्ध: संक्षेपेण निशम्यताम् ।
क्रीणाति स्माध्वग: कश्चित् पणेनाष्टावपूपकान् ।।२३।।
तेषां च यावत् षड् भुङ्क्ते तावन्मेने न तृप्तताम् ।
सप्तमेनाथ भुक्तेन तृप्तिस्तस्योपपद्यत ।।२४।।
ततश्चक्रन्द स जड़ो मुषितोऽस्मि न किं मया ।
एष एवादितो भुक्तोऽपूपो येनास्मि तर्पित: ।।२५।।
नाशिता: किं वृथैवान्ये मया हस्ते न किं कृता: ।
इति शोचन् क्रमात् तृप्तिमजानन् जहसे जनै: ।।२६।।

## ६३

## मूर्खदासकथा

(५)

कश्चिद्दासो हि वणिजा मूर्खः केनाप्यभण्यत।
रक्षेस्त्वं विपणीद्वारं क्षणं गेहं विशाम्यहम् ॥२७॥
इत्युक्तवति यातेऽस्मिन् वणिजि द्वारपट्टकम्।
विपणीतो गृहीत्वांसे दासो द्रष्टुमगान्नटम् ॥२८॥
आगच्छंश्च ततो दृष्ट्वा वणिजा तेन भर्त्सितः।
त्वदुक्तं रक्षितं द्वारं मयेदमिति सोऽब्रवीत् ॥२९॥

## ६४

## मूर्खशिष्यद्वयकथा

(६)

भीतशिष्यद्वयं चेदं देवेदानीं निशम्यताम्।
गुरोः कस्याप्यभूतां द्वौ शिष्यावन्योन्यमत्सरौ ॥३०॥
तयोरेको गुरोस्तस्य दक्षिणं पादमन्वहम्।
अभ्यञ्जन् क्षालयामास वामं पादं तथेतरः ॥३१॥
दक्षिणाभ्यञ्जके जातु ग्रामं संप्रेषिते गुरुः।
अभ्यक्तवामपादं तं द्वितीयं शिष्यमभ्यधात् ॥३२॥
त्वमेव दक्षिणं पादमभ्यज्य क्षालयाद्य मे।
श्रुत्वेतत् मूर्खशिष्योऽसौ गुरुं स्वैरमभाषत ॥३३॥
प्रतिपक्षस्य सम्बन्धी न पादोऽभ्यज्यते एष मे।
एवमुक्तवतश्चास्य निर्बन्धं सोऽकरोद् गुरुः ॥३४॥
ततो विपक्षतच्छिष्यरोषादादाय तस्य तम्।
गुरोः शिष्यः स चरणं बलाद् ग्राव्णा च भग्नवान् ॥३५॥

मुक्ताक्रन्दे गुरौ तस्मिन् कुशिष्योऽन्यैः प्रविश्य सः।
ताड्यमानः सशोकेन गुरुणा तेन मोचितः ॥३६॥
अन्येद्युः सोऽपरः शिष्यः प्राप्तो ग्रामाद् विलोक्य ताम्।
अङ्घ्रीपोड़ां गुरोः पृष्टवृत्तान्तः प्रज्वलन् क्रुधा ॥३७॥
नाहं भनज्मि किं पादं तस्य सम्बन्धिनं द्विषः।
इत्याकृष्य द्वितोयाङ्घ्रीं गुरोस्तस्य बभञ्ज सः ॥३८॥
ततोऽत्र ताड्यमानोऽन्यैरपि भग्नोभयाङ्घ्रिणा।
गुरुणा तेन कृपया दुःशिष्यः सोऽप्यमोच्यत ॥३९॥
सर्वद्वेष्योपहास्यौ तो शिष्यौ द्वौ ययतुस्ततः।
गुरुश्च स्वक्षमाश्लाघ्यः स्वस्थः सोऽप्यभवत् क्रमात् ॥४०॥

## ६५

## तण्डुलभक्षककथा

## (७)

इमं च शृणुतेदानीं भीतं तण्डुलभक्षकम्।
अगात् कश्चित् पुमान् मूर्खः प्रथमं श्वाशुरं गृहम् ॥४१॥
स तत्र तण्डुलाञ्छ्वश्र्वा पाकार्थं स्थापितान् सितान्।
दृष्ट्वा भक्षयितुं तेषां मुष्टिं प्राक्षिपदानने ॥४२॥
तत्क्षणादागतायां च श्वश्र्वां मूर्खः स तण्डुलान्।
नाशकत्तान् निर्गिरितुं न चाप्युद्गिरितुं ह्रिया ॥४३॥
तत्पीनोच्छूनगल्लं च निरालापमवेत्य तम्।
तद्रोगशङ्कयाहूय तच्छ्वश्रूः पतिमानयत् ॥४४॥
सोऽप्यालोक्य निनायाशु वैद्यं वैद्योऽप्यपाटयत्।
शोफशङ्की हनुं तस्य मूढस्याक्रम्य मस्तकम् ॥४५॥
निययुर्लोकहासेन समं तस्य च तण्डुलाः।
इत्यकार्य्यं करोत्यज्ञो न च जानाति गूहितुम् ॥४६॥

## ९६

# मूर्खविप्रपुत्रकथा

## (८)

कश्चिच्च देव मूर्खोऽभूद्विप्रपुत्रः पिता च तम् ।
सायं जगाद गन्तव्यो ग्रामः पुत्र! त्वया प्रगे ।।४७।।
श्रुत्वेत्यपृष्ट्वा कार्य्यं तं पितरं प्रातरेव सः ।
गत्वा वृथैव तं ग्रामं सायमागात् कृतश्रमः ।।४८।।
ग्रामं गत्वाहमायात इत्याह पितरं च सः ।
गते त्वयि न किं सिद्धमिति चाह स तत्पिता ।।४९।।
तदेति निरभिप्रायचेष्टितो लोकहास्यताम् ।
मूर्खोऽनुभवति क्लेशं न कार्य्यं कुरुते पुनः ।।५०।।

## ९७

# मूर्खश्रमणकथा

## (९)

बभूव श्रमणः कश्चिद्विहारे क्वापि मूढधीः ।
स रथ्यायां भ्रमञ्जातु शुना जान्वदश्यत ।।५१।।
श्वदष्टः स विहारं स्वमुपागत्य व्यचिन्तयत् ।
किं वृत्तं जानुनि तवेत्येकैकः प्रक्ष्यतीह माम् ।।५२।।
प्रत्याययिष्याम्येवं च कियतोऽहं कियच्चिरम् ।
तदुपायं करोम्यत्र सर्वान् बोधयितुं सकृत् ।।५३।।
इत्यालोच्य समारुह्य स विहारोपरि द्रुतम् ।।
गृहीत्वा ग्रन्थिमुसलं मूढो भिक्षुरवादयत् ।।५४।।
अकारणमकाले किं ग्रन्थिं वादयसीति तम् ।
श्रुत्वाश्चर्य्येण मिलिताः पप्रच्छुरथ भिक्षवः ।।५५।।

शुना मे भक्षितं जानु तदेकैकस्य पृच्छतः ।
ब्रुवेऽहं कियदित्येवं यूयं संघटिता मया ।।५६।।
तद्बुध्यध्वं समं सर्वे जानु म पश्यतेति सः ।
भिक्षून् प्रत्यब्रवीदेतान्श्वदष्टं जानु दर्शयन् ।।५७।
ततः पार्श्वोपपीड़ं ते समग्रा भिक्षवोऽहसन् ।
कियन्मात्रे कृतोऽनेन संरम्भोऽयं कियानिति ।।५८।।

## ६८

## टक्कमूर्खकथा*

## (१०)

आख्यातः श्रमणो मूर्खष्टक्कमूर्खो निशम्यताम् ।
कदर्य्यः कोऽप्यभूत् क्वापि मूर्खष्टक्को महाधनः ।।५९।।
सभार्य्यः स सदा भुङ्क्ते सक्तूंल्लवणवर्जितान् ।
अन्यस्यान्नस्य बुबुधे नैव स्वादं स जातुचित् ।।६०।।
एकदा प्रेरितो धात्रा स भार्य्यामब्रवीन्निजाम् ।
क्षीरिणीं प्रति जाता मे श्रद्धा तामद्य मे पच ।।६१।।
तथेति तस्य सा भार्य्या पपाच क्षीरिणीं तदा ।
तस्थौ चाभ्यन्तरे गुप्तं स टक्कः शयनं श्रितः ।।६२।।
दृष्ट्वा प्राघुणिकः कश्चिदत्र मे मा स्म भूदिति ।
तावत्तस्य सुहृद्धूर्त्तष्टक्कस्तत्रैक आययौ ।।६३।।
क्व ते भर्त्तेति पप्रच्छ स च तां तस्य गेहिनीम् ।
साप्यदत्तोत्तरा तस्य प्राविशत् भर्त्तुरन्तिकम् ।।६४।।
आख्यातमित्रागमनां सोऽपि भार्य्यां जगाद ताम् ।
उपविश्येह रुदती पादावादाय तिष्ठ मे ।।६५।।
भर्त्ता मे मृत इत्येवं वदेश्च सुहृदं मम ।
ततो गतेऽस्मिन्नावाभ्यां भोक्तव्या क्षीरिणी सुखम् ।।६६।।
इत्युक्ता तेन यावत् सा प्रवृत्ता रोदितुं तदा ।
तावत् प्रविश्य सोऽपृच्छत् किमेतदिति तां सुहृत् ।।६७।।

* टक्क इति वाह्लिकदेशीयः पुरुषः ।

भर्त्ता मृतो मे पश्येति तयोक्तः स व्यचिन्तयत् ।
क्व पचन्तो मया दृष्टा सुखिता क्षोरिणोमियम् ।।६८।।
क्वाधुनैव विपन्नोऽयमेतद्भर्त्ता विना रुजम् ।
नूनं मां प्राघुणं दृष्ट्वा कृतमाभ्यामिदं मृषा ।।६९।।
तन्मया नैव गन्तव्यमित्यालोच्योपविश्य सः ।
धूर्त्ता हा मित्र हा मित्रेत्याक्रन्दंस्तत्र तस्थिवान् ।।७०।।
श्रुताक्रन्दाः प्रविश्यात्र बान्धवा मृतवत्स्थितम् ।
श्मशानं भौतटक्कं तं नेतुमासन् समुद्यताः ।।७१।।
उत्तिष्ठ बान्धवैर्यावदेतैर्नीत्वा न दह्यसे ।
इत्युपांश्ववदत् कर्णमूले भार्य्या तदा च तम् ।।७२।।
मेवं शठोऽयं टक्को मे क्षोरिणीं भोक्तुमिच्छति ।
नोत्तिष्ठामि तदेतस्मिन्नगतेऽहं मृतो यदि ।।७३।।
प्राणेभ्योऽप्यन्नमुष्टिर्हि मादृशानां गरीयसी ।
इति प्रत्यब्रवीद् भार्य्यामुपांश्वेव स तां जडः ।।७४।।
ततस्तेन कुमित्रेण नीत्वा तैः स्वजनैश्च सः ।
दह्यमानोऽपि निश्चेष्टो ददौ नामरणाद्वचः ।।७५।।
एवं स मूढो विजहौ प्राणान्न क्षोरिणीं पुनः ।
क्लेशार्जितं हि बुभुजे तस्यान्यैर्हेलया धनम् ।।७६।।

## ९९

## मार्जारमुग्धकथा

## (११)

श्रुतः कदर्य्यः श्रूयन्ताममी मार्जारभौतकाः ।
उज्जयिन्यामुपाध्यायो मुग्धः कोऽप्यभवन्मठे ।।७७।।
तत्र निद्रा न तस्याभून्मूषकोपद्रवान्निशि ।
तत्खिन्नस्तच्च सुहृदे स कस्मैचिदवर्णयत् ।।७८।।
मार्जारं स्थापयानीय सोऽत्र खादति मूषकान् ।
इति सोऽपि सुहृद् विप्रस्तमुपाध्यायम् अब्रवीत् ।।७९।।

मार्जारः कीदृशः क्वास्ते न स दृष्टचरो मया।
इत्युक्तवत्युपाध्याये तं सुहृत् सोऽब्रवीत् पुनः ॥८०॥
काचरे लोचने तस्य वर्णः कपिलधूसरः।
पृष्ठे च लोमशं चर्म रथ्यास्वटति चेह सः ॥८१॥
तद् एभिस्त्वम् अभिज्ञानैरन्विष्यानाययाशु तम्।
मित्र मार्जारम् इत्युक्त्वा तत्सुहृत् स ययौ गृहम् ॥८२॥
ततः शिष्यान् उपाध्यायः स जगाद जडो निजान्।
अभिज्ञानानि युष्माभिः श्रुतान्येव स्थितैरिह ॥८३॥
तदन्विष्यत मार्जारं रथ्यासु तमिह क्वचित्।
तथेति ते गताः शिष्यास्तत्र भ्रेमुरितस्ततः ॥८४॥
तथापि न तु तैर्दृष्टो मार्जारः स कदाचन।
अथैकं तं बटुं रथ्यामुखाद् ऐक्षन्त निर्गतम् ॥८५॥
काचरं नेत्रयुगले वर्णो धूसरपिङ्गलम्।
पृष्ठोपरि दधानं च लोमशं हरिणाजिनम् ॥८६॥
दृष्ट्वा तं सैष मार्जारः प्राप्तोऽस्माभिर्यथाश्रुतः।
इत्यवष्टभ्य तं निन्युरुपाध्यायान्तिकं च ते ॥८७॥
उपाध्यायोऽपि मित्रोक्तैर्युक्तं मार्जारलक्षणैः।
दृष्ट्वा तं स्थापयामास रात्रौ तत्र मठान्तरे ॥८८॥
मार्जारो नूनमस्मीति मेने सोऽपि बटुर्जडः।
मार्जाराख्यां कृतां शृण्वन्नात्मनस्तैरबुद्धिभिः ॥८९॥
प्रातः सोऽत्रागतो विप्रो बटुम् अन्तर्विलोक्य तम्।
इह केनायमानीत इति भीतान् उवाच तान् ॥९०॥
श्रुतोपलक्षणस्त्वस्तो मार्जारोऽस्माभिरेष सः।
आनीत इत्युपाध्यायो भीतः शिष्याश्च तेऽवदन् ॥९१॥
ततो विहस्य सोऽवादीद् विप्रो मूढाः क्व मानुषः।
क्व च तिर्य्यक् स मार्जारश्चतुष्पात् पुच्छवानपि ॥९२॥
तच्छ्रुत्वा तं बटुं मुक्त्वा तेऽब्रुवन् मन्दबुद्धयः।
तर्ह्यन्विष्यानयामस्तं मार्जारं तादृशं पुनः ॥९३॥

१००

## मूर्खग्राम्यकथा

(१२)

ग्राम्यः कश्चिदभून्मुग्धो गौरेका तस्य चाभवत् ।
सा च तस्यान्वहं धेनुः पयः पलशतं ददौ ।
कदाचिच्चाभवत् तस्य प्रत्यासन्नः किलोत्सवः ।।९४।।
एकवारं ग्रहीष्यामि पयोऽस्याः प्राज्यमुत्सवे ।
इति मूर्खः स नैवैतां मासमात्रं दुदोह गाम् ।।९५।।
प्राप्तोत्सवश्च यावत्तां दोग्धि तावत्पयोऽखिलम् ।
ततस्याश्छिन्नम् अच्छिन्नं लोकस्य हसितं त्वभूत् ।।९६।।

१०१

## मूर्खपुरुषकथा

(१३)

मन्दबुद्धिरभूत् कश्चित् पुमान् निशि स चैकदा ।
प्रभाते देवपूजां करिष्यन्नित्यचिन्तयत् ।।९७।।
उपयुक्तौ मम स्नानधूपाद्यर्थं जलानलौ ।
स्थापयामि तदेकस्थौ तौ शीघ्रं प्राप्नुयां यथा ।।९८।।
इत्यालोच्याम्बुकुम्भान्तः क्षिप्त्वाग्निं संविवेश सः ।
प्रातश्च वीक्षते यावद् गतोऽग्निर्नष्टमम्बु च ।।९९।।
अङ्गारमलिने तोये दृष्टे तस्याभवन्मुखम् ।
तादृगेव सहासस्य लोकस्यासीत् पुनः स्मितम् ।।१००।।

१०२

## मुग्धपशुपालकथा

(१४)

पशुपालो महामुग्धः कोऽप्यासीद् धनवान् वने ।
तस्य धर्त्ताः समाश्रित्य मित्रत्वे बहवोऽमिलन् ॥१०१॥
ते तं जगदुराढ्यस्य सुता नगरवासिनः ।
त्वत्कृते याचितास्माभिः सा च पित्रा प्रतिश्रुता ॥१०२॥
तच्छ्रुत्वा स ददौ तुष्टस्तेभ्योऽर्थं तं च ते पुनः ।
विवाहस्तव सम्पन्न इत्यूचुर्दिवसैर्गतैः ॥१०३॥
ततः स सुतरां तुष्टस्तेभ्यो भूरि धनं ददौ ।
दिनैश्च तं वदन्ति स्म पुत्रो जातस्तवेति ते ॥१०४॥
ननन्द तेन सर्वं च मूढस्तेभ्यः समर्प्य सः ।
पुत्रं प्रत्युत्सुकोऽस्मीति प्रारोदीच्चापरेऽहनि ॥१०५॥
रुदंश्चादत्त लोकस्य हासं धूर्तैः स वञ्चितः ।
पशुभ्य इव संक्रान्तजड़िमा पशुपालकः ॥१०६॥

१०३

## पितृगुणाख्यानमुग्धकथा

(१५)

कश्चित् पितृगुणाख्यानप्रवृत्तसखिमध्यगः ।
मुग्धः स्वपितुरुत्कर्षं वर्णयन्नेबमभ्यधात् ॥१०७॥
आबाल्याद् ब्रह्मचारी मे पिता नान्योऽस्ति तत्समः ।
तच्छ्रुत्वा त्वं कुतो जात इति तं सुहृदोऽब्रुवन् ॥१०८॥
मानसोऽहं सुतस्तस्येत्येवं पुनरपि ब्रुवन् ।
विशेषतो विहसितः स तैर्जड़शिरोमणिः ॥१०९॥

१०४

## तैलमुग्धकथा

(१६)

ब्रह्मचारिसुतं श्रुत्वा तैलमुग्धो निशम्यताम् ।
मुग्धोऽभूत् पुरुषः कश्चिद् भृत्यः शिष्टस्य कस्यचित् ॥११०॥
स तेन स्वामिना तैलमानेतुं वणिजोऽन्तिकम् ।
प्रेषितो जातु तत् तस्मात् पात्रे तैलमुपाददे॥१११॥
तैलपात्रं गृहीत्वा तदागच्छंस्तत्र केनचित् ।
ऊचे मित्रेण रक्षेदं तैलपात्रं स्रवत्यधः ॥११२॥
तच्छ्रुत्वा वीक्षितुमधः पात्रं तत् पर्य्यवर्तयत् ।
स मूढस्तेन तत् सर्वं तैलं तस्यापतद् भुवि ॥११३॥
एतद्बुद्ध्वा लोकहास्योऽसौ निरस्तः स्वामिना गृहात् ।
तस्मात् स्वबुद्धिमुग्धस्य वरं न त्वनुशासनम् ॥११४॥

१०५

## वेतालपञ्चविंशतिः

नवमकथा

### अनङ्गरत्याः विज्ञानवित्पतिलाभः

आसीत् अवन्तिषु उज्जयिनीति पुरी। तस्यामासीत् वीरदेवो नाम नृपतिः। तस्य पद्मरतिनाम्नी महादेवी आसीत्। तस्य अनङ्गरतिर्नाम अनङ्गमोहिनी कन्या समजायत। क्रमेण तस्या वृद्धि गताया स राजा सदृशं वरं प्रेप्सुः पृथिवीमण्डलस्थान् सर्वान् नृपतीन् पटलिखितान् आनाययत्। यदा तेषु एकोऽपि तस्याः सदृशो न प्रत्यभासत, तदा स राजा वात्सल्यात् तां सुतामभाषत—'वत्से! अहं तावत् ते सदृशं वरं न

पश्यामि, तत् सर्वान् नृपतीन् समानाय्य स्वयंवरं कुरुस्व'। एतत् पितृवचनमाकर्ण्य सा राजपुत्री जगाद—'तात! स्वयंवरमतिक्लेपणं तदहं नेच्छामि। यो हि युवा सुरूपः केवलं पूर्णं विज्ञानं वेत्ति, तस्मै अहं त्वया देया; न्यूनाधिकेन मे नास्ति प्रयोजनम्।'

इति दुहितुर्वचः समाकर्ण्य यावत् स भूपतिस्तादृशं वरमन्विष्यति, तावत् तत् लोकमुखात् विदित्वा चत्वारो वीरा विज्ञानिनो भव्याः पुरुषा दक्षिणापथात् तं राजानमाययुः। ते च राज्ञा सत्कृता एकैकशः स्वं स्वं विज्ञानं राजसमक्षं शशंसुः। तेषामेको जगाद—अहं तावत् शूद्रः नाम्ना पञ्चफुटिकः एकोऽहमन्वहं पञ्च अग्रधाणि वसनयुग्मानि करोमि। तदेवं विज्ञानिने मह्यम् अनङ्गरतिस्ते दुहिता दीयताम्' इति।

द्वितीयोऽब्रवीत्—'अहं तावद् वैश्यः भाषाज्ञो नाम। सर्वेषां मृगपक्षिणां रुतं वेद्मि; तदेषा राजपुत्री मह्यं दीयताम्' इति।

ततस्तृतीयोऽभाषत—'अहं खड्गधरो नाम भुजवीर्य्यशाली क्षत्रियः। खड्गविद्याविज्ञाने अस्यां क्षितौ मे प्रतिमल्लो नास्ति। हे राजन् तदेषा तनया ते मह्यं दीयताम्' इति।

अतश्चतुर्थोऽब्रवीत्—'अहं तावत् जीवदत्तो नाम विप्रः, मम चैतादृशं विज्ञानमस्ति यत् मृतानपि जन्तून् आनीय आशु जीवतो दर्शयामि। तन्माम् एषा ते कन्यका पतिं प्रपद्यताम्' इति। एवं ब्रुवतस्तान् दिव्यवेशाकृतीन् पश्यन् राजा सुतया सह दोलारूढ इवाभवत्।

इति कथामाख्याय वेतालः राजानमब्रवीत्—'राजन् एतेषां कस्मै कन्या देया'। एतदाकर्ण्य राजा प्रत्यवादीत्—'कोऽयं गहनः प्रश्नः? शूद्राय कुविन्दाय कथं क्षत्रिया दीयते, वैश्याय च; यच्च तद्गतं मृगादिभाषाविज्ञानं तत् कस्मिन् कार्य्ये उपयुज्यते? विप्रेणापि तेन स्वकर्मप्रच्युतेन ऐन्द्रजालिकेन किम्? तस्मात् क्षत्रियायैव खड्गधराय विद्याशौर्य्यशालिने सा देया' इति।

सहसा लब्धजीवः समुत्तस्थौ। तदवलोक्य बन्धुवर्गस्य सर्वस्य 'दिष्ट्याऽयं बालको जीवति' इति सहर्षनिनादः समुदचरत्।

इति कथां समाख्याय वेतालः त्रिविक्रमसेनं नृपम् अब्रवीत्—'राजन् ब्रूहि, स योगीन्द्रः परदेहे प्रविशन् कथं वा पूर्वं प्रारुदत् किमर्थं वा अनृत्यत्' इति वेतालात् श्रुत्वा राजा तमवादीत्—'बाल्ये पितृभ्यां लालितमद्य इदं त्यजामि इति दुःखितः दुस्त्यजदैहिकस्नेहात् प्रथमं रुरोद नवं देहं प्रविश्य यौवनलाभो भवति इति हर्षात् ननर्त्त च।

१०८

चतुर्विंशकथा

## अवर्णनीयसम्बन्धः

आसीत् पुरा दक्षिणापथे धर्मो नाम मण्डलेश्वरः। तस्य चन्द्रावती नाम मालवदेशभवा राज्ञी आसीत्। तस्यां कन्यैका लावण्यवती नाम प्रसूता। तस्याञ्च कन्यायां प्रदेयायां स धर्मनरपतिः राष्ट्रभेदिभिर्दायादैरुन्मूलितः पलाय्य भार्य्यया दुहित्रा च सह रात्रौ स्वराष्ट्रात् निरगात्। गच्छन् स विन्ध्याटवीमाससाद।

ततो राजा पदातिः भिल्लानां दुर्गां पल्लीमगच्छत्। वसनाभरणान्वितं स्त्रीकन्यासहितं तं बहवो दस्यवः सायुधा मुषितुं प्राधावन्। तानागच्छतो विलोक्य राजा भार्य्यासुते जगाद,—'म्लेच्छा इमे मा युवां स्पृशन्तु, एतत् गहनं वनं विशतम्' इति। ततो राज्ञी लावण्यवत्या तनयया भयात् वनमध्यं विवेश। सर्वे दस्यवः निपत्य प्रहारक्षतसर्वाङ्गं तं नृपं निजघ्नुः। वनगुल्मान्तरस्थिता राज्ञी भर्त्तारं निहतं दृष्ट्वा अन्यत् दूरं गहनं विवेश। तत्र कस्यचित् पद्मसरसस्तीरे अशोकतरुतले सा राजमहिषी चन्द्रावती सुतया लावण्यवत्या नितरां श्रान्तया भयशोकव्याकुलया सह समुपाविशत्।

तावत् अभ्यर्णनिवासो कोऽपि महामनुष्यः चण्डसिंहो नाम सपुत्रः अश्वारूढः मृगयार्थं तद्वनमभ्यगात्। स सिंहपराक्रमं नाम पुत्रं तयोः राजभार्य्यासुतयोः पादपद्धती दृष्ट्वा प्रोवाच, 'पुत्र! एते सुरखे सुभगे

पादपद्धती अनुसृत्य यदि स्त्रियो प्राप्नुवः तदा तयोरेकां यथारुचि स्वीकुरुस्व।' इत्युक्तवन्तं तं पुत्रः सिंहपराक्रमः प्रोवाच—'तात ! यस्याः सूक्ष्मौ पादौ रेखया अनया दृश्येते सा भार्य्या ममैव प्रतिभाति; बृहत्यौ यस्याः पादपद्धती दृश्येते एषा ज्येष्ठवयास्तव योग्या' इति। एतत् पुत्रवचः श्रुत्वा स चण्डसिंहः 'तथा' इति प्रतिपद्य ससुतः तां पादपद्धतिमनुसरन् शनैः ययौ। प्राप्य तत्स्थानं तां श्यामां चन्द्रावतीं राज्ञीं रूपलावण्य-विभासिनीं ददर्श; उपाययौ च सकौतुकः सह पुत्रेण ताम्। सापि तं दृष्ट्वा चौरशङ्किनी वित्रस्ता समुत्तस्थौ। अश्वावतीर्णश्चण्डसिंहस्तामुवाच—'अलं त्रासेन, आवाम् इह मृगयार्थमागतौ तत् विश्वस्य निराशङ्कं वदतं के युवाम् अरण्यमेवमुपासाते ? कथं वा इह अमनुषे वने प्रविष्टे स्थः ? इदं हि युवयोर्वपुः रत्नप्रासादवासार्हं किमिति वराङ्गनविचरणयोग्यौ चरणौ कण्टकिनीमिमां भुवम् अवतारितौ ? तदात्मवृत्तान्तं ब्रूतम्। आवयोर्हृदयं भवत्यौ एतामवस्थां गते दृष्ट्वा भृशं दूयते। अस्मिन्-श्वापदावृतेऽरण्ये वां स्थितिं द्रष्टुं न शक्नुवः' इति चण्डसिंहेनोक्ता राज्ञी निःश्वस्य लज्जाशोकाकुला शनैः स्वं वृत्तान्तमवर्णयत्। ततश्चण्डसिंहः निःस्वामिकां तां मत्वा समाश्वास्य च मधुरैर्वाक्यैरनुरञ्जयन् ससुतां चन्द्रावतीं स्वीचकार, निजां पुरीं च निनाय। ततस्तस्या राज्ञ्या सूक्ष्म-पादत्वात् चण्डसिंहसुतः सिंहपराक्रमः तां भार्य्यां व्यधात्। तत्सुतां च लावण्यवतीं राजकन्यां पादयोः बृहत्त्वात् चण्डसिंहो भार्य्याञ्चकार। सापि राज्ञी जन्मान्तरगतेव अवशा अनाथा कृच्छ्रपतिता अङ्गीचकार, किं करोतु तपस्विनी ? पूर्वप्रतिज्ञातं हि सत्यं कोऽतिवर्त्तते। एवं पाद-विपर्य्यासात् तयोः पितापुत्रयोः ते दुहितामातरौ भार्य्ये तदा श्वश्रूस्नुषे जाते। कालेन च तयोः ताभ्यां पतिभ्यां द्वयोरेव पुत्रा दुहितारश्च क्रमात् जज्ञिरे'।

इति कथामाख्याय स वेतालः तं नृपं पप्रच्छ, राजन् ! अनयोर्मातृ-दुहित्रोस्ताभ्यां पतिभ्यां पितापुत्राभ्यां ये पुत्राकन्यादयः जाताः, ते अन्योन्यं किं सम्बन्धाश्च भवन्ति'। इति वेतालवचः समाकर्ण्य बहु विमृशन् राजा किमपि वक्तुमशक्नुवन् तूष्णीक एव प्रययौ।

सप्तमोऽङ्कः

# आर्य्यकचारुदत्तसंवादः

(ततः प्रविशन्ति चारुदत्तो विदूषकः चेटः प्रवहणस्थार्य्यकश्च)

आर्य्यकः—अहो! नगरात् सुदूरमपक्रान्तोऽस्मि। तत् किमस्मात् प्रवहणादवतीर्य्य वृक्षवाटिकागहनं प्रविशामि? उताहो प्रवहणस्वामिनं पश्यामि? अथ वा कृतं वृक्षवाटिकागहनेन! अभ्युपपन्नवत्सलः खलु तत्रभवानार्य्यचारुदत्तः श्रूयते; तत् प्रत्यक्षीकृत्य गच्छामि।

चारुदत्तः—सखे मैत्रेय! अवतारय वसन्तसेनाम्।

विदूषकः—किं निगडेन वद्धौ अस्याः पादौ, येन स्वयं नावतरति? (उत्थाय प्रवहणमुद्घाट्य) भोः न वसन्तसेना, वसन्तसेनः खल्वेषः [किं निअडेण वद्धा से गोड्डा जेण सअं ण ओदरेदि? भो! ण वसन्तसेणा वसन्तसेणो क्खु एसो]

चारुदत्तः—वयस्य! अलं परिहासेन! न कालमपेक्षते स्नेहः। अथवा स्वयमेवावतारयामि! (इत्युत्तिष्ठति)

आर्य्यकः—(दृष्ट्वा) अये अयमेव प्रवहणस्वामी। न केवलं श्रुतिरमणीयो दृष्टिरमणीयोऽपि। हन्त, रक्षितोऽस्मि।

चारुदत्तः—(प्रवहणमधिरुह्य दृष्ट्वा च) अये! तत् कोऽयम्! को भवान्!

आर्य्यकः—शरणागतो गोपालप्रकृतिरार्य्यकोऽस्मि।

चारुदत्तः—किं घोषादानीय योऽसौ राज्ञा पालकेन बद्धः।

आर्य्यकः—अथ किम्।

चारुदत्तः—विधिनैवोपनीतस्त्वं चक्षुर्विषयमागतः।
अपि प्राणानहं जह्यां न तु त्वां शरणागतम्॥
वर्द्धमानक! चरणान्निगडमपनय।

चेटः—यदार्य्य आज्ञापयति—(तथा कृत्वा) आर्य्य! अपनीतानि निगडानि। [जं अज्जो आणवेदि। अज्ज अवणीदाइं णिगलाइं]

आर्य्यकः—सखे चारुदत्त! अहमपि प्रणयेनेदं प्रवहणमारूढः। तत्-क्षन्तव्यम्।

चारुदत्तः—अलङ्कृतोऽस्मि स्वयंग्राहप्रणयेन भवता।

आर्य्यकः—अभ्यनुज्ञातो भवता गन्तुमिच्छामि।

चारुदत्तः—गम्यताम्।

आर्य्यकः—भवतु, अवतरामि।

चारुदत्तः—सखे नावतरितव्यम्। प्रत्यग्रापनीतसंयमनस्य भवतोऽलघु-सञ्चारा गतिः। सुलभपुरुषसञ्चारेऽस्मिन् प्रदेशे प्रवहणं विश्वासमुत्पादयति। तत् प्रवहणेनैव गम्यताम्।

आर्य्यकः—यथाह भवान्।

चारुदत्तः—क्षेमेण व्रज बान्धवान्।

आर्य्यकः—ननु मया लब्धो भवान् बान्धवः।

चारुदत्तः—यदुद्यते पालके महती रक्षा न वर्त्तते, तच्छीघ्रम् अपक्रामतु भवान्।

आर्य्यकः—एवम्, पुनर्दर्शनाय (इति निष्क्रान्तः)

चारुदत्तः—कृत्वैवं मनुजपतेर्महद्व्यलीकं
स्थातुं हि क्षणमपि न प्रशस्तमस्मिन्।
मैत्रेय! क्षिप निगडं पुराणकूपे
पश्येयुः क्षितिपतयो हि चारदृष्टया॥

(वामाक्षिस्पन्दनं सूचयित्वा) सखे मैत्रेय! वसन्तसेना-दर्शनोत्सुकोऽयं जनः। तदेहि गच्छावः।

## द्वितीयोऽध्यायः

# देवी-महिषासुरविग्रहः

देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा।
महिषेऽसुराणामधिपे देवाणाञ्च पुरन्दरे ॥१॥
तत्रासुरैर्महावीर्यैर्देवसैन्यं पराजितम्।
जित्वा च सकलान् देवानिन्द्रोऽभून्महिषासुरः ॥२॥
ततः पराजिता देवाः पद्मयोनिं प्रजापतिम्।
पुरस्कृत्य गतास्तत्र यत्रेशगरुडध्वजौ ॥३॥
यथावृत्तं तयोस्तद्वन्महिषासुरचेष्टितम्।
त्रिदशाः कथयामासुर्देवाभिभवविस्तरम् ॥४॥
सूर्येन्द्राग्न्यनिलेन्दूनां यमस्य वरुणस्य च।
अन्येषाञ्चाधिकारान् स स्वयमेवाधितिष्ठति ॥५॥
स्वर्गान्निराकृताः सर्वे तेन देवगणा भुवि।
बिचरन्ति यथा मर्त्या महिषेण दुरात्मना ॥६॥
एतद् वः कथितं सर्वममरारिविचेष्टितम्।
शरणञ्च प्रपन्नाः स्मो बधस्तस्य विचिन्त्यताम् ॥७॥
इत्थं निशम्य देवानां वचांसि मधुसूदनः।
चकार कोपं शम्भुश्च भ्रुकुटीकुटिलाननौ ॥८॥
ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः।
निश्चक्राम महत्तेजो ब्रह्मणः शङ्करस्य च ॥९॥
अन्येषाञ्चैव देवानां शक्रादीनां शरीरतः।
निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥१०॥
अतुलं तत्र तत्तेजः सर्वदेवशरीरजम्।
एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा ॥११॥
ततः समस्तदेवानां तेजोराशिसमुद्भवाम्।
तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥१२॥

शूलं शूलाद् विनिस्कृत्य ददौ तस्यै पिणाकधृक् ।
चक्रञ्च दत्तवान् कृष्णः समुत्पाद्य स्वचक्रतः ॥१३॥
अन्यैरपि सुरैर्देवी भूषणैरायुधैस्तथा ।
सम्मानिता ननादोच्चैः साट्टहासं मुहुर्मुहुः ॥१४॥
तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ।
अमायतातिमहता प्रतिशब्दो महानभूत् ॥१५॥
चक्षुभुः सकला लोकाः समुद्राश्च चकम्पिरे ।
चचाल वसुधा चेलुः सकलाश्च महीधराः ॥१६॥
जयेति देवाश्च मुदा तामूचुः सिंहवाहिनीम् ।
तुष्टुवुर्मुनयश्चैनां भक्तिनम्रात्मभूर्त्तयः ॥१७॥
दृष्ट्वा समस्तं संक्षुब्धं त्रैलोक्यममरारयः ।
सन्नद्धाखिलसैन्यास्ते समुत्तस्थुरुदायुधाः ॥१८॥
आः किमेतदिति क्रोधादाभाष्य महिषासुरः ।
अभ्यधावत तं शब्दमशेषैरसुरैर्वृतः ॥१९॥
स ददर्श ततो देवीं व्याप्त लोकत्रयं त्विषा ।
पादाक्रान्त्या नतभुवं किरीटोल्लिखिताम्बराम् ॥२०॥
ततः प्रववृते युद्धं तया देव्या सुरद्विषाम् ।
शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगन्तरम् ॥२१॥

१११

## राजतरङ्गिणी

चतुर्थस्तरङ्गः

### गौडानां स्वामिभक्तिः

राजा श्रीर्ललितादित्यः सार्वभौमस्ततोऽभवत् ।
प्रादेशकेश्वर स्रष्टुर्विधेर्बुद्धेरगोचरः ॥१॥
अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः ।
अयमन्योऽपि दोषोऽभूदितरक्षितिपोचितः ॥२॥

दत्त्वापि यत् स मध्यस्थं श्रीपरिहासकेशवम् ।
जघान तीक्ष्नपुरुषैस्त्रिग्राम्यां गौडपार्थिवम् ।।३।।
गौडोपजीविनामासीत् सत्त्वमत्यद्भुतं तदा ।
जहुर्ये जीवितं धीराः परोक्षस्य प्रभोः कृते ।।४।।
शारदादर्शनमिषात् काश्मीरान् सम्प्रविश्य ते ।
मध्यस्थदेवावसथं संहताः समवेष्टयन् ।।५।।
दिगन्तरस्थे भूपाले प्रविविक्षूनवेक्ष्य तान् ।
परिहासहरिं चक्रुः पूजकाः पिहितारररिम् ।।६।।
ते रामस्वामिनं प्राप्य राजतं विक्रमोर्जिताः ।
परिहासहरिभ्रान्त्या चक्रुरुत्पाट्य रेणुशः ।।७।।
तिलं तिलं तं कृत्वा च चिक्षिपुर्दिक्षु सर्वतः ।
नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे ।।८।।
श्यामला रक्तसंसिक्तास्तेऽपतन् निहता भुवि ।
अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दोज्ज्वला इव ।।९।।
तदीयरुधिरासारैः समभूदुज्ज्वलीकृता ।
स्वामिभक्तिरसामान्या धन्या चेयं वसुन्धरा ।।१०।।
क्व दीर्घकाललङ्घ्योऽध्वा शान्ते भक्तिः क्व च प्रभौ ।
विधातुरप्यसाध्यं तद् यद् गौडैर्विहितं तदा ।।११।।
लोकोत्तरस्वामिभक्तिप्रभावाणि पदे पदे ।
तादृशानि तदाभवन् भृत्यरत्नानि भूभृताम् ।।१२।।

## ११२

## इट्टिलजयापीड़-संवादः

पितामह समो भूया इत्यमात्यवचःस्मरन् ।
राजा श्रीमान् जयापीडः प्राप राज्यं ततः क्रमात् ।।१।।
अथाकस्मान्महीपालः प्रजाभाग्यविपर्य्ययैः ।
त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोऽध्वना ।।२।।

कि दिग्जयादिभि: क्लेशै: स्वदेशादर्ज्यतां धनम् ।
इत्यर्थ्यमान: कायस्थै: स्वमण्डलमदण्डयत् ।।३।।
यत् सतां प्रशमाधायि पापस्योपदिदेश तत् ।
जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डताम् ।।४।।
सर्वकालं ब्राह्मणानामहो धैर्य्यमकुण्ठितम् ।
निस्त्रिंशस्य बभूवुस्ते तस्यापि परिपन्थिन: ।।५।।
तुलमूल्यापहर्त्ता च चन्द्रभागातटेस्थित: ।
विप्राणां शतमेकोनमशृणोत् तज्जले मृतम् ।।६।।
अथ विज्ञप्तिसमये तुलमूल्यौकसो द्विजा: ।
चुक्रुशुर्जातु तस्याग्रे प्रतिहारकराहता: ।।७।।
मनुमान्धातृरामाद्या बभूवु: प्रवरा नृपा: ।
अनुभावि तदग्रेऽपि ब्राह्मणैर्न विमानना ।।८।।
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलम् ।
निर्दग्धुं हि क्षणेनैव विप्रा: शक्ता: प्रकोपिता: ।।९।।
तदाकर्ण्याशु सामन्तत्यक्तपृष्ठ: क्षमापति: ।
उल्लासितैकभ्रूलेखो दर्पाद्वचनमब्रवीत् ।।१०।।
भिक्षाकणभुजो कोऽयं शठानां वो मदज्वर:
येनर्षय इव ब्रूथ प्रभावाख्यापकं वच: ।।११।।
भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्यथ ।
इट्टिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विज: ।।१२।।
राजन् ! युगानुरूपेण भावाभावानुवर्त्तिन: ।
शासितुस्तेऽनुसारेण न कस्मादृषयो वयम् ।।१३।।
आह स्म विश्वामित्रो वा वशिष्ठो वा तपोनिधि: ।
त्वमगस्त्योऽथवा किं स्या इति दर्पेण तं नृप: ।।१४।।
ज्वलन्निव तत: स्फुर्जत्तेजो दुष्प्रेक्ष्यविग्रह: ।
स फणीवोत्फणस्ताम्यन् कोपान्नृपतिमब्रवीत् ।।१५।।
भवान् यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा ।
विश्वामित्रमुखेभ्योऽहं तत्रैको भवितुं क्षम: ।।१६।।
विहस्योवाच तं राजा विश्वामित्रादि कोपत: ।
हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ।।१७।।

पाणिना ताडयन्नुर्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः ।
मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किम् ॥१८॥
तच्छ्रुत्वा विहसन् राजा कोपाद्ब्राह्मणमब्रवीत् ।
पततु ब्रह्मदण्डोऽसौ किमद्यापि विलम्बते ॥१९॥
नन्वयं पतितो आत्मेत्यथ विप्रेण भाषिते ।
राज्ञः कनकदण्डोऽङ्के वितानस्खलितोऽपतत् ॥२०॥
कृतव्रणः स तेनाङ्के विसर्पक्लिन्नविग्रहः ।
कीर्य्यमाणक्रिमिकुलः क्रकचैश्चारितैरभूत् ॥२१॥
अनुभाव्य व्यथां भाविनिरय क्लेशवर्णिकाम् ।
गणरात्रेण तं प्राणाः काङ्क्षितापगमा जहुः ॥२२
ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधरधियः ।
अकाण्डदण्डस्रष्टाथ ययौ दण्डधरान्तिकम् ॥२३॥
तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान् ।
एवं प्रतापिनः सैकान् भूभोगो भूपतेरभूत् ॥२४॥

११३

# रामचरितम्

## रामपालेन वरेन्द्रभूमेरुद्धरणम्

श्रियमुद्रितलक्ष्मीकः कमलानन्दिनः स वस्तनुताम् ।
कृत्वा लोकाहरणं महाक्षये यं विधुर्बिभर्ति ॥१॥
तत्कुलदीपो नृपतिरभूद् धर्मो धामवानिवेक्ष्वाकुः
यस्याब्धि तीर्णा श्रावणो रराजापि कीर्त्तिरवदाता ॥२॥
हरिणोपासितधामा विग्रहपालः किलाभवद्राजा ।
नतभूभृतपंक्तिरथो गोत्रे रत्नाकरेऽमुष्मिन् ॥३॥
सहसावितरर्णाजितकर्णः क्षौणीं यौवनश्रियोद्वहे ।
अश्रान्तदानधाराविश्रयो योभूद्वृषानुचरः ॥४॥

अथ तस्य महीपालः सुरपालोऽपि पुरुषोत्तमो रामः ।
अपि लक्ष्मणोऽपि शत्रुघ्नलक्ष्मणो जज्ञिरे तनयाः ।।५।।
प्रथममुपरते पितरि महीपाले भ्रातरि क्षमाभारम् ।
विभ्रत्यनीतिकारम्भरते रामाधिकारितां दधति ।।६।।
मांसभुजोच्चैर्दशकेन जनकभूर्दस्युनोपधिव्रतिना ।
दिव्याह्वयेन सीता वासालंकृतिरहारि कान्तास्य ।।७।।
लोकान्तरप्रणयिनो दुर्नयभाजोग्रजन्मनो व्यसनात् ।
पतितान्धकारवत्यनुभावादुदहारि गोतमी तेन ।।८।।
हत्वा राजप्रवरं भूयो भूमण्डलं गृहीतवतः ।
स निरास्थदस्त्रकलया सहस्रदोर्विद्विषः स्वास्थ्यम् ।।९।।
त्रस्तानुजतनुजस्य च भीमस्य विवरप्रहरकृतः ।
साभिख्यया वरेन्द्री क्रियाक्षमस्य खलु रक्षणीयाभूत् ।।१०।।
अथ धृत्यमर्षगर्वोच्छलदुत्साहोयमुन्मिलत् पुलकः ।
रामो महानुभावोऽपि वैरिविजयोद्यमञ्चक्रे ।।११।।
तस्य महाबाहिन्यां गुप्तायां तरणिसम्भवेनाभूत् ।
द्विषमभिषेणयतो मुखरितदिक्कोलाहलः समुत्तारः ।।१२।।
सहसा विघटनया जीवग्राहग्राहिताहितप्रवरम् ।
स्फुरदसमधामसम्पत्तिमीयमानबलसम्बाधम् ।।१३।।
सम्यगनुगतरसाशेनाप्रथमसहोदरेण रामेण ।
भीमः स सिन्धुरगत्तोरणं.रचयता किलाबन्धि ।।१४।।
अथ बहुतरसादृत्या युक्तो रामेण वित्तपालस्य ।
सूनोरभ्यासे सहसा सौरेशितनयः प्रैषि ।।१५।।
रामेणोचितरूपा कापि दशास्योहिता विपद्घोरा ।
स्वशिरश्छेदव्यतिकरमदर्शदेष स्वयं हि दृशा ।।१६।।
निहतकुटुम्बस्य पुरो दारुणमास्कन्दनं किमपि दधतः ।
धृतचन्द्रहासधाम्नो लङ्काराजः कृतोऽस्य वधः ।।१७।।
कर्षन् धनञ्जयाप्तां ताञ्च शुचिमयोनिजां प्रजाजननीम् ।
स चिराय चरितरक्षोभुवमिष्टतमामुरीचक्रे ।।१८।।

# सेनराजविजयसेनस्य राज्यकाले उमापतिधरकृत-प्रशस्तिः

लक्ष्मीवल्लभशैलजादयितयोरद्वैतलीलागृहं
प्रद्युम्नेश्वरशब्दलाञ्छनमधिष्ठानं नमस्कुर्महे ।
यत्रालिङ्गनभङ्गकातरतया स्थित्वान्तरे कान्तयो-
र्देवीभ्यां कथमप्यभिन्नतनुताशिल्पेऽन्तरायः कृतः ।।१।।
यत्सिंहासनमीश्वरस्य कनकप्रायं जटामण्डलं
गङ्गाशीकरमञ्जरीपरिकरैर्यच्चामरप्रक्रिया ।
श्वेतोत्फुल्लफणाञ्चलः शिवशिरःसन्दानदामोरग-
श्छत्रं यस्य जयत्यसावचरमो राजा सुधादीधितिः ।।२।।
वंशे तस्यामरस्त्रीविततरतकलासाक्षिणो दाक्षिणात्य-
क्षोणीन्द्रैर्वीरसेनप्रभृतिभिरभितः कीर्त्तिमद्भिर्बभूवे ।
यच्चारित्रानुचिन्तापरिचयशुचयः सूक्तिमाध्वीकधाराः
पाराशर्य्येण विश्वश्रवणपरिसरप्रीणनाय प्रणीताः ।।३।।
तस्मिन् सेनान्ववाये प्रतिसुभटशतोत्सादनब्रह्मवादी
स ब्रह्मक्षत्रियाणामजनि कुलशिरोदाम सामन्तसेनः ।
उद्गीयन्ते यदीयाः स्खलदुदधिजलोल्लोलशीतेषु सेतोः
कच्छान्तेष्वप्सरोभिर्दशरथतनयस्पर्द्धया युद्धगाथाः ।।४।।
गृहाद्गृहमुपागतं व्रजति पत्तनं पत्तना-
द्वनाद्वनमनुद्रुतं भ्रमति पादपं पादपात् ।
गिरेर्गिरिमधिश्रितन्तरति तोयनिधिन्तोयधे-
र्यदीयमरिसुन्दरीसरकपृष्ठलग्नं यशः ।।५।।
दुर्वृत्तानामयमरिकुलाकीर्णकर्णाटलक्ष्मी-
लुण्टाकानां कदनमतनोत्तादृगेकाङ्गवीरः ।
यस्मादद्याप्यविहतवसामान्समेदःसुभिक्षा-
हृष्यत् पौरस्त्यजति न दिशं दक्षिणां प्रेतभर्त्ता ।।६।।

उद्गन्धीन्याज्यधूमैर्मृगशिशुरसिताखिन्नवैखानसस्त्री-
स्तन्यक्षीराणि कीरप्रकरपरिचितब्रह्मपारायणानि ।
येनासेव्यन्त शेषे वयसि भवभयास्कन्दिभिर्मस्करीन्द्रैः
पूर्णोत्सङ्गानि गङ्गापुलिनपरिसरारण्यपुण्याश्रमाणि ॥७॥
अचरमपरमात्मज्ञानभीष्मादमुष्मा-
न्निजभुजमदमत्तारातिमाराङ्कवीरः ।
अभवदनवसानोद्भिन्ननिर्णिक्ततत्तद्-
गुणनिवहमहिम्नां वेश्म हेमन्तसेनः ॥८॥
महाराज्ञी यस्य स्वपरनिखिलान्तःपुरवधू-
शिरोरत्नश्रेणीकिरणसरणिस्मेरचरणा ।
निधिः कान्तेः साध्वीव्रतविततनित्योज्ज्वलयशा
यशोदेवी नाम त्रिभुवनमनोज्ञाकृतिरभूत् ॥९॥
ततस्त्रिजगदीश्वरात् समजनिष्ट देव्यास्ततोऽ-
प्यरातिबलशातनोज्ज्वलकुमारकेलिक्रमः ।
चतुर्जलधिमेखलावलयसीमविश्वम्भरा-
विशिष्टजयसान्वयो विजयसेन-पृथ्वीपतिः ॥१०॥
गणयतु गणशः को भूपतींस्ताननेन
प्रतिदिनरणभाजा ये जिता वा हता वा ।
इह जगति विषेहे स्वस्य वंशस्य पूर्वः
पुरुष इति सुधांशौ केवलं राजशब्दः ॥११॥
त्वं नान्यवीरविजयीति गिरः कवीनां
श्रुत्वाऽन्यथामननरुढनिगूढरोषः ।
गौडेन्द्रमद्रवदपाकृत कामरूप-
भूपं कलिङ्गमपि यस्तरसा जिगाय ॥१२॥
शूरंमन्य इवासि नान्य किमिह स्वं राघव श्लाघसे
स्पर्द्धां वर्द्धन मुञ्च वीर विरतो नाद्यापि दर्पस्तव ।
इत्यन्योन्यमहर्निशप्रणयिभिः कोलाहलैः क्ष्माभुजां
यत्कारागृहयामिकैर्नियमितो निद्रापनोदक्लमः ॥१३॥

पाश्चात्यचक्रजयकेलिषु यस्य यावद्
गङ्गाप्रवाहमनुधावति नौवितानें ।
भर्गस्य मौलि-सरिदम्भसि भस्मपङ्क-
लग्नोज्झितेव तरिरिन्दुकला चकास्ति ॥१४॥

दिक्शाखामूलकाण्डं गगनतलमहाम्भोधिमध्यान्तरीयं
भानोः प्राक्प्रत्यगद्रिस्थितिमिलदुदयास्तस्य मध्याह्नशैलम् ।
आलम्बस्तम्भमेकं त्रिभुवनभवनस्यैकशेषं गिरीणां
स प्रद्युम्नेश्वरस्य व्यधित वसुमतीवासवः सौधमुच्चैः ॥१५॥

प्रासादेन तवामुनैव हरितामध्वा निरुद्धो मुधा
भानोऽद्यापि कृतोऽस्ति दक्षिणदिशः कोणान्तवासी मुनिः ।
अन्यामुच्छ्रपथोऽयमृच्छतु दिशं विन्ध्योप्यसौ वर्द्धतां
यावच्छक्ति तथापि नास्य पदवीं सौधस्य गाहिष्यते ॥१६॥

स्रष्टा यदि स्रक्ष्यति भूमिचक्रे
सुमेरुमृत्पिण्डविवर्त्तनाभिः ।
तदा घटः स्यादुपमानमस्मिन्
सुवर्णकुम्भस्य तदर्पितस्य ॥१७॥

बिलेशयविलासिनीमुकुटकोटिरत्नाङ्कुर-
स्फुरत्किरणमञ्जरीच्छुरितवारिपूरं पुरः ।
चखान पुरवैरिणः स जलमग्नपौराङ्गना-
स्तनैणमदसौरभोञ्चलितचञ्चरीकं सरः ॥१८॥

प्रस्तोतुमस्य परितश्चरितं क्षमः स्यात्
प्राचेतसो यदि पराशरनन्दनो वा ।
तत्कीर्त्तिपूरसुरसिन्धुविगाहनेन
वाचः पवित्रयितुमत्र तु नः प्रयत्नः ॥१९॥

यावद्वास्तोस्पतिसुरधुनी भूर्भुवः स्वः पुनीते
यावच्चान्द्री कलयति कलोत्तंसतां भूतभर्त्तुः ।
यावच्चेतो रमयति सतां श्वेतिमानं त्रिवेदी
तावत्तासां रचयतु सखी तत्तदेवास्य कीर्त्तिः ॥२०॥

निर्णिक्तसेनकुलभूपतिमौक्तिकानाम्
अग्रन्थिलग्रथनपक्ष्मलसूत्रवल्लिः ।
एषा कवेः पदपदार्थविचारशुद्ध-
बुद्धेरुमापतिधरस्य कृतिः प्रशस्तिः ।।२१।।
धर्मप्रणप्ता मनदासनप्ता बृहस्पतेः सूनुरिमां प्रशस्तिम् ।
चखान वारेन्द्रकशिल्पिगोष्ठीचूडामणी राणकशूलपाणिः ।।२२।।

११५

# नैषधचरितम्

एकविंशः सर्गः

## नारायणस्तुतिः

छद्ममत्स्यवपुषस्तव पुच्छास्फालनाज्जलमिवोद्धतमब्धेः ।
श्वैत्यमेत्य गगणाङ्गनसङ्गादाविरस्ति विबुधालयगङ्गा ।।१।।
भूरिसृष्टिधृतभूवलयानां पृष्ठसीमनि किणैरिव चक्रैः ।
चुम्बितावतु जगत् क्षितिरक्षाकर्मठस्य कमठस्तवमूर्त्तिः ।।२।।
दिक्षु यत्क्षुरचतुष्टयमुद्रामम्ब्रवैमि चतुरोऽपि समुद्रान् ।
तस्य पोत्रिवपुषस्तव दंष्ट्रा तुष्टयेऽस्तु मम वास्तु जगत्याः ।।३।।
दानवौघगहनप्रभवस्त्वं सिंह ! मामव रवैर्घनघोरैः ।
वैरिदारि-दिविषत्सुकृतास्त्रग्रामसम्भवभवन्मनुजार्द्धः ।।४।।
स्वेन पूर्य्यत इयं सकलाशा भो बले ! न मम किं भवतेति ।
त्वं बटुः कपटवाचि पटीयान् देहि वामन ! मनःप्रमदं नः ।।५।।
क्षत्रजातिरुदियाय भुजाभ्यां या तवैव भुवनं सृजतः प्राक् ।
जामदग्न्यवपुषस्तव तस्यास्तौ लयार्थमुचितौ विजयेताम् ।।६।।
पांशुला बहुपतिर्नियतं या वेधसाऽरचि रुषा नवखण्डा ।
तां भुवं कृतवतो द्विजभुक्तां युक्तकारितरता तव जीयात् ।।७।।

उद्भवाजतनुजादज ! कामं विश्वभूषण ! न दूषणमत्र।
दूषणप्रशमनाय समर्थं येन देव ! तव वैभवमेव ।।८।।
नो ददासि यदि तत्त्वधियं मे यच्छ मोहमपि त्वं रघुवीर !
येन रावणचमूर्युधि मूढा त्वन्मयं जगदपश्यदशेषम् ।।९।।
क्रौञ्चदुःखमपि वीक्ष्य शुचा यः श्लोकमेकमसृजत् कविराद्यः ।
स त्वदुत्थकरुणः खलु काव्यं श्लोकसिन्धुमुचितं प्रबबन्ध ।।१०।।
ते हरन्तु दुरितव्रततिं मे यैः स कल्पविटपी तव दोर्भिः ।
छद्मयादवतनोरुदपाटि स्पर्द्धमान इव दानमदेन ।।११।।
प्राणवत् प्रणयिराध ! न राधापुत्रशत्रुसखिता सदृशी ते ।
श्रीप्रियस्य सदृगेव तव श्रीवत्समात्महृदि धर्त्तुमजस्रम् ।।१२।।
रेवतीश ! सुषमा किल नीलस्याम्बरस्य रुचिरा तनुभासा ।
कामपाल ! भवतः कुमुदाविर्भावभावितरुचेरुचितैव ।। १३।।
पाञ्चजन्यमधिगत्य करेणापां च जन्यमसुरानिव वक्षि ।
चेतनाः स्थ किल पश्यत किं नाचेतनोऽपि मयि मुक्तविरोधः ।।१४।।
आप्तकाम ! सृजसि त्रिजगत् किं किं भिनत्सि यदि निर्मितमेव ।
पासि चेदमवतीर्य मुहुः किं स्वात्मनापि यदवश्यविनाश्यम् ।।१५।।
धर्मबीजसलिला सरिदङ्घ्रावर्थमूलमुरसि स्फुरति श्रीः ।
कामदैवतमपि प्रसवस्ते ब्रह्म मुक्तिदमसि स्वयमेव ।।१६।।
भक्तिभाजमनुगृह्य दृशा मां भास्करेण कुरु वीततमस्कम् ।
अर्पितेन मम नाथ ! न तापं लोचनेन विधुना विधुनासि ।।१७।।
लङ्घयन्नहरहर्भवदाज्ञाम् अस्मि हा विधिनिषेधमयीं यः ।
दुर्लभं स तपसापि गिरैव त्वत्प्रसादमहमिच्छुरलज्जः ।।१८।।
विश्वरूप ! कृतविश्व ! कियत्ते वैभवाद्भुतमणौ हृदि कुर्वे ।
हेम नह्यति कियन्निजचीरे काञ्चनाद्रिमधिगत्य दरिद्रः ।।१९।।

# दशावतारस्तोत्रम्

### प्रथमः सर्गः

## श्रीगीतगोविन्दम्

प्रलयपयोधिजले धृतवानसि वेदं
विहितवहित्रचरित्रमखेदम् ।
केशव धृतमीनशरीर
जय जगदीश हरे ।।१।।
क्षितिरतिविपुलतरे तिष्ठति तव पृष्ठे
धरणिधारणकिणचक्रगरिष्ठे ।
केशव धृतकूर्मशरीर
जय जगदीश हरे ।।२।।
वसति दशनशिखरे धरणी तव लग्ना
शशिनि कलङ्ककलेव निमग्ना ।
केशव धृतशूकररूप
जय जगदीश हरे ।।३।।
तव करकमलवरे नखमद्भुतशृङ्गं
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप
जय जगदीश हरे ।।४।।
छलयसि विक्रमणे बलिमद्भुतवामन
पदनखनीरजनितजनपावन ।
केशव धृतवामनरूप
जय जगदीश हरे ।।५।।
क्षत्रियरुधिरमये जगदपगतपापं
स्नपयसि पयसि शमितभवतापम् ।
केशव धृतभृगुपतिरूप
जय जगदीश हरे ।।६।।

वितरसि दिक्षु रणे दिक्पतिकमनीयं
दशमुखमौलिर्वालं रमणीयम्।
केशव धृतरामशरीर
जय जगदीश हरे।।७।।
वहसि वपुषि विशदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम्।
केशव धृतहलधररूप
जय जगदीश हरे।।८।।
निन्दसि यज्ञविधेरहह श्रुतिजातं
सदयहृदयर्दाशतपशुघातम्।
केशव धृतबुद्धशरीर
जय जगदीश हरे।।९।।
म्लेच्छनिवहनिधने कलयसि करवालं
धूमकेतुमिव किमपि करालम्।
केशव धृतकल्किशरीर
जय जगदीश हरे।।१०।।
श्रीजयदेवकवेरिदमुदितमुदारं
शृणु सुखदं शुभदं भवसारम्।
केशव धृतदशविधरूप
जय जगदीश हरे।।११।।

११७

# शुकसप्तति

## कलहप्रियाख्यानम्

(४२)

अस्ति देउलाख्यो ग्रामः। तत्र रार्जासहो नाम राजपुत्रः। तद्-भार्य्या कलहप्रियेति विश्रुता। एकस्मिन् काले सा भर्त्रा सार्द्धं कलहं विधाय पुत्रद्वयोपेता पितुर्गृहं प्रति चलिता। सा च कोपवशात् पत्तनानि वहूनि वनानि च वहूनि अतिक्रम्य मलयपार्श्वस्थमहाकाननं गता।

गहने गता सा कलहप्रिया व्याघ्रमेकं ददर्श। स च व्याघ्रस्तां सपुत्रां दृष्ट्वा पुच्छेन भूमिमाहत्य धावितः। सा व्याघ्रमागच्छन्तं दृष्ट्वा धाष्टर्यात् पुत्रौ चपेटया हत्वा जगाद—कथम् एकैकशो व्याघ्रभक्षणाय कलहं कुरुथः। अयमेकस्तावद् विभज्य भुज्यताम्। पश्चादन्यो द्वितीयः कश्चिल्लक्ष्यते। इति श्रुत्वा व्याघ्रमारी काचिदियम् इति मत्वा व्याघ्रो भयाकुलचित्तो नष्टः।

तं दृष्ट्वा कानने व्याघ्रं नष्टं जातं भयाकुलम्।
मृगधूर्त्तो हसन्नाह व्याघ्रो नष्टः कुतो भयात्।।

व्याघ्रः—'गच्छ गच्छ जम्बुक त्वमपि गूढ़प्रदेशम्। यतो व्याघ्र-मारीति या शास्त्रे श्रूयते तयाहं हन्तुमारब्धः, परं गृहीतकरजीवितो नष्टः शीघ्रं तदग्रतः इति।

मृगधूर्तः—व्याघ्र! त्वया महत् कौतुकमावेदितम् यत् मांसपिण्डाद् मानुषादपि विभेषि।

व्याघ्रः—प्रत्यक्षमेव मया सा आत्मपुत्रौ एकैकशो मामत्तुं कलहाय-मानौ चपेटया घ्नन्ती दृष्टा।

जम्बुकः—स्वामिन्! यत्र तिष्ठति सा धूर्त्ता तत्र गम्यताम्। यदि तव तत्र गतस्य सा सम्मुखमपीक्षते तदा मम त्वदीयवेला स्मरणीया।

व्याघ्रः—शृगाल! यदि त्व मां मुक्त्वा यासि तदा वेलापि अवेला स्यात्।

जम्बुकः—यद्येव तर्हि मां निजगले वद्धा चल शीघ्रम्। अथ स व्याघ्रस्तथा कृत्वा काननं ययौ। व्याघ्रमारी अपि प्राप्ता पुत्रसहिता। तथा तया व्याघ्रमार्य्या जम्बुकम् आक्षिपन्त्या अङ्गुल्या तर्जयन्त्या ऊचे—

रे रे धूर्त्त त्वया दत्तं मह्यं व्याघ्रत्रयं पुरा।
विश्वस्याद्यैकमानीय कथं यासि वदाधुना।।
इत्युक्त्वा धाविता तूर्णं व्याघ्रमारी भयङ्करा।
व्याघ्रोऽपि सहसा नष्टो गलवद्धशृगालकः।।

# विप्रभूतकथा

## (४३)

अस्ति वत्सोम नाम नगरम्। तत्र विद्वान् केशवनामा दरिद्रो ब्राह्मणो निवसति। तस्य च प्रिया करगराभिधाना यथार्थनाम्नी सर्व-जन्तूद्वेगकारिणी। तद्द्वारदेशवृक्षस्थितो भूतस्तस्या करगराया भयात् पलाय्य अटव्यां गतः। ब्राह्मणोऽपि तस्या उद्वेगाद् देशान्तराभिमुखोऽभूत्। सोऽपि च तेन भूतेन दृष्टो जल्पितश्च—मार्गश्रान्तस्त्वम् तेन त्वयाद्य ममातिथिना भाव्यम् इति।

विप्रेण भीरुणा उक्तम्—यदातिथ्यं करोषि तद्विधेहि शीघ्रम् इति। भूतेन उक्तम्—न त्वया भेतव्यम्। त्वं मम स्वामी यतोऽहं त्वद्गृहद्वार-वृक्षस्थो भूतः करगराभयेन इहागतः। ततस्तव निजस्वामिनो गुणवदुप-कर्त्तव्यमेव। तस्मात्त्वं द्विज मृगावतीं राजधानीं मदनभूपतिसनाथां गच्छ। तत्र चाहं तत् पुत्रीं मृगलोचनां ग्रहीष्ये। सा चान्यैः मान्त्रिकैः नीरुजा न भविष्यति। त्वयि समागते तव दर्शनादेवाहं ताम् त्यक्ष्यामि। ततः परं तु मन्त्रवादो न विधेयः इति भणित्वा सोऽपि भूतो गत्वा तां राजपुत्रीं जग्राह। विप्रोऽपि तत्र ययौ। राजकुलं गतो विप्रः अनुष्ठानसामग्रीं विदधे। ततो भूत इयं मुक्तेति उक्त्वा तां त्यक्त्वा जगाम। ब्राह्मणाय राज्ञा सुता राज्यार्द्धञ्च प्रदत्तम्। केशवोऽपि पूर्णमनोरथो बभूव।

स करगरापतिः राजकन्यया सार्द्धं राजलक्ष्मीं भुङ्क्ते। अत्रान्तरे स भूतः कर्णावतीं गत्वा राज्ञो शत्रुघ्नस्य भार्य्यां सुलोचनां जग्राह। सा मदनस्य पितृष्वसा। सा चात्यर्थं पीड़िता जीवितशेषा अभूत्। शत्रुघ्नः तं ब्राह्मणं केशवमामन्त्रयामास। करगरापतिः अगन्तुकामोऽपि सन् भार्य्या-नुरोधतो जगाम। तत्र गतः सम्मानितो महीभूजा शत्रुघ्नेन गतः सुलोचना-वेश्मनि। स च भूतस्तमायान्तं दृष्ट्वा परुषैर्वाक्यैः तर्जयन्नित्याह—"यद् मया प्रतिपन्नम् तद् एकदेशे कृतम्। अधुना तु विप्र त्वया आत्मा रक्षणीय इति।

तदा कालवेदी स द्विजः कृताञ्जलिर्भूत्वा तत्कर्णमाश्रित्य जगाद—प्राप्ता करगरा भूत पृष्ठलग्नात्र मेऽधुना इति।

श्रुत्वैतद्वचनं भीतो भूतो विस्मितमानसः।
यामीति ब्राह्मणं प्रोच्य पात्रं त्यक्त्वा जगाम तत ।।

तदा भार्य्यायाम् स्वस्थीभूतायाम् तेन राज्ञा शत्रुघ्नेन सत्कृतः स ब्राह्मणो मृगवतीनगरं ययौ।

## ११६

## शकटालकथा

## (४८)

पाटलीपुरपट्टने सार्वभौमो नन्दो नाम राजाभूत्। शकटालस्तस्य नृपतेः सचिवाग्रणीरभूत्। तद्बुद्धिविभवाक्रान्ताश्च भूपालाः सर्वेऽपि करदा अभवन्।

स च राजा धर्मनाशकं कुर्वन् निर्द्रव्यां च मेदिनीं विदधानो निषिद्धो मन्त्रिणा। ततस्तेनापि मूर्खेण राज्ञा सचिवोऽवटे निक्षिप्तः। स च सपुत्रस्तत्र चिरं तस्थौ। ततः शकटाले महामात्ये तत्रस्थे सर्वत्र मृतो मृत इति वार्त्ताभूत्।

ततो वङ्गालनाथेन तत्परीक्षार्थम् आत्मीयपुरुषा घोटिकाद्वयं समर्प्य नन्दपार्श्वे प्रेषिताः। यदेतयोर्मध्यात् का माता का च पुत्री इति ज्ञात्वा समागन्तव्यम्। सर्वलक्षणसम्पूर्णे सदृशे घोटिके तानि च लक्षणानि शालिहोत्रज्ञातव्यानि। यदा च कोऽपि नन्दराज्ये घोटिकानिर्णयं कर्त्तुं न क्षमस्तदा नन्दो राजा व्यचिन्तयत्, शकटालं विनाहं परिभवास्पदं जातः इति।

विचिन्त्यैवं दण्डपाशिकमब्रवीत्—'शकटालकुले कश्चित् कूपगतो विद्यते न वा' इति। तेनोक्तम्, 'कश्चिदस्ति परं व्यक्तितो न ज्ञायते। यतः पूर्वोद्दिष्टं भक्तं कश्चित् कूपगतो गृह्णाति' इति। तं च मन्त्रिणम् कूपादाकृष्य सम्मान्य राजसमीपे नीतवान्।

मन्त्रिणोक्तम्—स्वामिन् किं विधेयं तदादिश। राज्ञोक्तम्—'अस्य वड़वायुगलस्य मध्ये का माता का च पुत्री इति सन्देहममीषां छलात्मनां दूतानां शीघ्रं छिन्धि' इति।

ततो मन्त्रिणा तद् वड़वायुगं सपर्य्याणं कारयित्वा बाह्याल्याम् अतिबाह्य पर्य्याणरहितं विधाय श्रान्तं सम्मोचितम्। तदनु तद्युगलं च मातृसुताविचेष्टितं चकार। माता जिह्वया सुतां लिलेह सुता च तां प्रति अतिवत्सलाभूत्। ततः मन्त्रिणा मातृसुताविशेषो राज्ञोऽग्रे निवदितः। ततश्च शकटालः परां लक्ष्मीं प्रसिद्धिं च लेभे।

## १२०

## ब्राह्मणचर्मकारसंवादः

## (५५)

आसीत् चर्मकूटे ग्रामे द्विजः श्रीधरो नाम। तत्रैव निवसति स्म चन्दनाख्यचर्मकारः। तत्पार्श्वात् श्रीधरेण उपानहयुगलं कारितम्। चर्मकारोऽपि नित्यमेव द्रव्यं पणं वा याचते। विप्रोऽपि वदति—त्वां हृष्टचित्तं करिष्ये। एव सुमहान् कालः ययौ। स विप्रोऽन्यदा चर्मकारेण विधृतः। एतस्मिन्नन्तरे ग्रामपालस्य गृहे सुतो जातः। ततो द्विजः छलान्वेषी सन् प्राह—चर्मकृन्मया पूर्वमुक्तं त्वां हृष्टचित्तं करिष्यामि। तदस्मिन् सुते जाते त्वं हृष्टचित्तो न वेति। तच्छ्रुत्वा चर्मकारो व्यचिन्तयत् —यदि ब्रूवे नाहं हृष्टचित्त इति तदा राज्ञा ग्राह्योऽस्मि। अन्यथा च द्रव्यं याति। ततस्तेनोक्तम् 'हृष्टचित्तोऽहं जातः' इति। ततो द्विजश्छलेनात्मानं विमुच्य गतः।

नवमोपाख्यानम्

## कमलाकरस्य विद्यार्जनम्

विक्रमे राज्यं कुर्वति त्रिविक्रमो बभूव पुरोहितः। तस्य त्रिविक्रमस्य पुत्रः कमलाकरः। स पितुः प्रसादात् घृतौदनं भुक्त्वा वस्त्र-भूषण-ताम्बुलादिना शरीरसम्पुष्टो विषयसुखमनुभवन् तिष्ठति स्म। एकदा पित्रोक्तम्, रे पुत्र! ब्राह्मणजन्म प्राप्य त्वया कथमेवं स्थीयते स्वेच्छावृत्त्या। अयमात्मा जन्मशतं नानायोनिं प्राप्नोति। ब्राह्मणकुले जन्म महता पुण्येन लभ्यत। तल्लब्ध्वाऽपि त्वं दुष्टाचारो जातः। सर्वदा वहिरेव वससि, भोजनकाले गृहमायासि। अनुचितमेव त्वया क्रियते। तवायं विद्याभ्यासकालः। अस्मिन् काले विद्याभ्यासं न करोषि चेत् उत्तरत्र महान् सन्तापो भविष्यति।

येषां न विद्या न तपो न दानं
न चापि शीलं न गुणो न धर्मः।
ते मर्त्यलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥
किं कुलेन विशालेन विद्याहीनस्य देहिनः।
अकुलीनोऽपि यो विद्वान् सर्वैरेव स पूज्यते ॥

रे पुत्र! यावदहं जीवामि, तावत् त्वया विद्यैवाभ्यसनीया। अभ्यस्ता विद्या तव सकलमपि बन्धुकृत्यं करिष्यति। उक्तञ्च—

मातेव रक्षति पितेव हिते नियुङ्क्ते
भार्य्येव चाभिरमयत्यपनीय खेदम्।
कीर्त्तिञ्च दिक्षु वितनोति करोति वित्तं
किं किं न साधयति कल्पलतेव विद्या ॥

एवं तत् पितृवचनं श्रुत्वा पश्चात्तापयुक्तः कमलाकरो "यदाहं सर्वज्ञो भविष्यामि तदास्य पितुर्मुखं द्रक्ष्यामि" इत्युक्त्वा काश्मीरदेशं जगाम।

तत्र चन्द्रमौलिभट्टोपाध्यायसमीपं गत्वा दण्डवत् प्रणम्योक्तवान्, भो स्वामिन्! अहं मूर्खः, भवतां नामधेयं श्रुत्वा विद्याभ्यासार्थमागतः। मयि कृपां विधाय यथा विद्या भवति तथा विधेयं श्रीमद्भिरिति पुनर्दण्डवत् प्रणाममकरोत्। ततस्तैरङ्गीकृतम्। अहर्निशं च तेषां शुश्रूषामकरोत्।

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्या चतुर्थेनोपपद्यते।।

एव शुश्रूषां कुर्वतो महान् कालो गतः। एकदा उपाध्यायस्तस्योपरि कृपां विधाय सिद्धसारस्वतमन्त्रोपदेशं कृतवान्। तेनोपदेशेन सर्वज्ञो भूत्वा स कमलाकर उपाध्यायस्यानुज्ञां गृहीत्वा स्वनगरमगमत्।

## १२२

### त्रयोदशोपाख्यानम्

## विक्रमकृत-ब्राह्मणरक्षा

एकदा विक्रमो राजा राज्यभारं मन्त्रिवर्गे निधाय स्वयं योगिवेशेन पृथ्वीपर्यटनं कर्त्तुमुद्यतः। ग्रामे एकरात्रिं नयति, नगरे पञ्चरात्रीर्गमयति। एवं परिभ्रमन्नेकदा नगरमेकमगमत्। तन्नगरसमीपस्थित नदीतटे देवालय एक आसीत्। तस्मिन् देवालये सर्वे महाजनाः पौराणिकात् पुराणं शृण्वन्ति। राजापि नद्यां स्नात्वा देवालयं गत्वा देवं नमस्कृत्य महाजन-समीपे उपविष्टः। तस्मिन् समये पौराणिकाः पुराणवाक्यानि पठन्ति।

श्रूयतां धर्मसर्वस्वं यदुक्तं ग्रन्थकोटिभिः।
परोपकारः पुण्याय पापाय परपीडनम्।।
चतुःसागरपर्यन्तां यो दद्याद्वसुधामिमाम्।
यश्चाभयं च भूतेभ्यस्तयोरभयदोऽधिकः।।
यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते।
ततः किं जन्मना ब्रूहि वृथैव क्रियते नृभिः।।

एवं पुराणकथनसमये कश्चिद्वृद्धो ब्राह्मणः पत्न्या सह नदीमुत्तरन् महा-पूरेण नीयमानो हाहाकारं कुर्वन् नदीमध्ये महाजनान् प्रति वदति—

भो भो महाजनाः धावध्वम्, धावध्वम्, वृद्धः सपत्नीको ब्राह्मणोऽहं नदीप्रवाहेण बलात् नीयमानः। कोऽपि सत्त्वाधिको धार्मिकः मम सपत्नीकस्य जीवनदानं ददातु। जलेनोह्यमानस्य दीनध्वनिं श्रुत्वा महाजनाः सर्वेऽपि सकौतुकं पश्यन्ति। परं न कोऽपि नदीमध्ये प्रविश्य प्रवाहादपनेतुं तस्य अभयं प्रयच्छति।

ततो विक्रमो राजा मा भैषीरिति तस्याभयं दत्त्वा नदीमध्ये प्रविश्य पत्न्या सह तं ब्राह्मणं महापूरादाकृष्य तटमानीतवान्। ब्राह्मणोऽपि स्वस्थः सन् राजानमवदत्, भो महासत्त्व ! ममैतच्छरीरं पूर्वं मातापितृभ्यामुत्पादितम्। इदानीं त्वत्सकाशात् द्वितीयं जन्म प्राप्तम्। अतः प्राणदानान्महोपकारिणस्तव किमपि प्रत्युपकारं न करिष्यामि चेत्तर्हि मम जीवितं व्यर्थं स्यात्। यत् कृच्छ्रचान्द्रायणादिना किमपि सुकृतमुपार्जितमस्ति तत् सर्वं गृहाणेत्युक्त्वा तत् पुण्यं राज्ञे समर्प्याशिषं दत्त्वा पत्न्या सह निजस्थानं गतः।

## १२३

### चतुर्विंशोपाख्यानम्

# पुत्रेषु पितृसम्पद्वण्टनम्

विक्रमादित्यस्य बिषये पुरन्दरपुरी नाम नगरी बभूव। तत्र महाधनिकः कश्चिद् वणिगासीत्। स चतुरः पुत्रानाहूयावादीत्, भोः पुत्राः मयि मृते चतुर्णामेकत्रावस्थानं भवति वा न वा' पश्चाद्विवादो भविष्यति, तर्हि जीवन्नेव भवतां चतुर्णां ज्येष्ठानुक्रमेण भागं करोमि। अथ चतुर्णां भागं कृत्वा च मञ्चाधस्ताच्चत्वारो भागाः मया निःक्षिप्ता सन्ति, ज्येष्ठकनिष्ठभागक्रमेण गृह्णीध्वम्। तथा च तैरङ्गीकृतम्।

ततस्तस्मिन् परलोकं गते भ्रातरश्चत्वारो मासमेकत्र स्थिताः। ततस्तेषां स्त्रीणां परस्परं कलहो जातः। तदनन्तरं तैर्विचारितं, किमर्थं कोलाहलः क्रियते ? पित्रा जीवतैव पूर्वं चतुर्णां विभागः कृतोऽस्ति।

तन्मञ्चाधःस्थितं विभागक्रमं गृहीत्वा विभक्ताः सन्तः सुखेन तिष्ठाम इत्युक्ता यावन्मञ्चाधः खनन्ति तावच्चतुर्णां पात्राणाम् अधश्चत्वारि सम्पुटानि दृष्टानि। तेषां मध्ये एकत्र सम्पुटे मृत्तिकाभूत्, एकत्र अङ्गारा आसन्, अन्यसम्पुटे अस्थीनि स्थितानि, एकत्र पलालपुञ्जः स्थितः। एतच्चतुष्टयं दृष्ट्वा ते चत्वारः परस्परं विस्मयं गताः प्रोचुः, "अहो ! अस्मात् पितृकृत-सम्यग्विभागक्रमात् अर्थविभागक्रमः केन ज्ञायते" इत्युक्त्वा राजसभामगच्छन्। तस्याः पुरतो निवेदितो वृत्तान्तः, सम्यग्विभागक्रमो न ज्ञातः। पुनश्चत्वारो भ्रातरो यत्र यत्र ज्ञातारः सन्ति तेषां पुरतः अमुं वृत्तान्तं निवेदयन्ति स्म। परं कोऽपि निर्णयं कर्त्तुं न शशाक।

अस्मिन् समये कुम्भकारगृहे स्थितः शालिवाहनः अमुं वृत्तान्तमाकर्ण्य भणति स्म किमत्र दुर्बोधमस्ति किमाश्चर्य्यञ्चेति। अनन्तरं विभागविषये पृष्टः सोऽवदत्, "एते चत्वार एकस्य धनिकस्य पुत्राः। जीवता तेषां पित्रा ज्येष्ठकनिष्ठानुक्रमो विभागः कृतः तद्यथा—ज्येष्ठस्य मृत्तिका दत्ता, तेन या समुपार्जिता भूमिः सा सर्वथा दत्ता। द्वितीयस्य पलालपुञ्जो दत्तः, तेन सर्वविधधान्यानि दत्तानि। तृतीयस्य अस्थीनि दत्तानि, तेन सर्वेऽपि पशवो दत्ताः। चतुर्थस्य अङ्गारो दत्तः, तेन सकलमपि सुवर्णं दत्तम्। एवं शालिवाहनेन तेषां विभागः कृतः। तेऽपि सुखिनो भूत्वा स्वनगरं जग्मुः।

१२४

# भोजप्रबन्धः

## भोज-दारुशीर्षविप्रसंवादः

अथ कदाचिद् भोजराजो मृगयारसपराधीनो हयमारुह्य प्रतस्थे।

ततो नदीं समुत्तीर्णं शिरस्यारोपितेन्धनम्।
वेषेण ब्राह्मणं ज्ञात्वा राजा पप्रच्छ सत्वरम्॥

'कियन्मानं जलं विप्र ?'

स आह—'जानुदघ्नं नराधिप!'

चमत्कृतो राजा आह—'ईदृशी किमवस्था ते?'

स आह—'न हि सर्वे भवादृशाः।'

राजा प्राह कुतूहलात्—'विद्वन्! याचस्व कोशाधिकारिणं, लक्षं दास्यति मद्वचसा।' ततो विद्वान् काष्ठं भूमौ निक्षिप्य कोशाधिकारिणं गत्वा प्राह—'महाराजेन प्रेषितोऽहं, लक्षं मे दीयताम्।' ततः स हसन् आह, 'विप्र! भवन्मूर्तिः लक्षं नार्हति।' ततो विषादी स राजानमेत्य आह, 'स पुनर्हसति देव! नार्पयति।' राजा कुतूहलादाह, 'लक्षद्वयं प्रार्थय, दास्यति।' पुनरागत्य विप्रः—'लक्षद्वय देयमिति राज्ञोक्तम्' इत्याह। स पुनर्हसति। विप्रः पुनरपि भोजं प्राप्य आह, 'स पापिष्ठो मां हसति नार्पयति।' ततः कौतूहली लीलानिधिर्महीं शासत् श्री भोजराजः प्राह, 'विप्र! लक्षत्रयं याचस्व, अवश्यं स दास्यति।' स पुनरेत्य प्राह, 'राजा मे लक्षत्रयं दापयति। स पुनर्हसति। ततः क्रुद्धो विप्रः पुनरेत्याह, 'देव! स नार्पयत्येव—

राजन्! कनकधाराभिस्त्वयि सर्वत्र वर्षति।
अभाग्यच्छत्रसंच्छन्ने मयि नायान्ति विन्दवः॥
त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः।
अस्माकमर्कपत्राणां पूर्वपत्रेषु सन्देहः॥
एकमस्य परमेकमद्यमं निस्त्रपत्वमपरस्य वस्तुनः।
नित्यमुष्णमहसा निरस्यते नित्यमन्धतमसं प्रधावति॥

ततो राजा प्राह—

'क्रोधं मा कुरु मद्वाक्याद् गत्वा कोशाधिकारिणम्।
लक्षत्रयं गजेन्द्राश्च दश ग्राह्यास्त्वया द्विज॥'

ततस्तदङ्गरक्षकं प्रेषयति। ततः कोशाधिकारी धर्मपत्रे लिखति—

'लक्षं लक्ष पुनर्लक्षं मत्ताश्च दश दन्तिनः।
दत्ता भोजेन तुष्टेन जानुदघ्नप्रभाषणात्॥'

## १२५

# विप्रभोजसंवादः

अथ मुञ्जे तपोवनं याते बुद्धिसागरं मुख्यामात्यं विधाय स्वराज्यं बुभुजे भोजराजनृपतिः। एवमतिक्रामति काले कदाचित् राज्ञा क्रीडतोद्यानं गच्छता कोऽपि धारानगरवासी विप्रो लक्षितः। स च राजानं वीक्ष्य नेत्रे निमील्य आगच्छन् राज्ञा पृष्टः—'द्विज! त्वं मां दृष्ट्वा न स्वस्तीति जल्पसि, विशेषेण लोचने निमीलयसि, तत्र को हेतुः?' इति। विप्र आह, 'देव! त्वं वैष्णवोऽसि, विप्राणां नोपद्रवं करोषि, ततस्त्वत्तो न मे भीतिः, किन्तु कस्मैचित् किमपि न प्रयच्छसि, तेन तव दाक्षिण्यमपि नास्ति, अतस्ते किमाशीर्वचसा? किञ्च प्रातरेव कृपणमुखावलोकनात् परतोऽपि लाभहानिः स्यात्, इति लोकोक्त्या लोचने निमीलिते।
अपिच—

प्रसादो निष्फलो यस्य कोपश्चापि निरर्थकः।
न तं राजानमिच्छन्ति प्रजाः षण्डमिव स्त्रियः॥
अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम्।
यच्च बाहुवलं भीरोर्व्यर्थमेतत्त्रयं भुवि॥

अदातुर्दाक्षिण्यं न हि भवति; देव! पुरा कर्णदधीचिशिविविक्रमप्रमुखाः क्षितिपतयो यथा परलोकमलङ्कुर्वाणा निजदानसमुद्भूतदिव्यनवगुणैर्निवसन्ति महीमण्डले, तथा किमपरे राजानः?

पण्डिते चैव मूर्खे च बलवत्यपि दुर्बले।
ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता॥
निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति।
तस्माद्देहेष्वनित्येषु कीर्त्तिमेकामुपार्जयेत्॥

राजापि तेन वाक्येन पीयूषपूरस्नात इव परब्रह्मणि लीन इव लोचनाभ्यां हर्षाश्रूणि मुमोच, प्राह च द्विजं, 'विप्रवर! शृणु—

सुलभाः पुरुषा लोके सततं प्रियवादिनः।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः॥

इति विप्राय लक्षं दत्त्वा—'किं ते नाम ?' इत्याह। विप्रः स्वनाम भूमौ लिखति 'गोविन्दः' इति। राजा वाचयित्वा, 'विप्र! प्रत्यहं राजभवनमागन्तव्यम्, न ते कश्चिन्निषेधः, विद्वांसः कवयश्च कौतुकात् सभामानेतव्याः, कोऽपि विद्वान् न खलु दुःखभागी भवतु एनमधिकारं पालय' इत्याह।

## १२६

# अभिनवगीतगोविन्दम्

उत्कलराज-गजपतिपुरुषोत्तमदेवकृतम्

**प्रथमः सर्गः**

वारि-पूरित-गगन-कन्दर-जलधिमग्न-महासुरम्।
शङ्खनामकमाशु भित्वा कलितवेदमनान्तरम्॥१॥
नमत मीनशरीरमद्भुतमखिलमुनिजनवन्दितम्।
जननपालननाशकारणनीलगिरिपतिमच्युतम्॥ध्रुवपदम्
विपुलगिरिवरनगरकाननजलधिसञ्चयसञ्चितम्।
धरणिमण्डलमहह दधतं चरमकायनिवेशितम्॥२॥
नमत कूर्मशरीरमद्भुतमखिलमुनिजनबन्दितम्।
जननपालननाशकारणनीलगिरिपतिमच्युतम्॥ध्रुवपदम्
राहुकवलितशिष्टशशधरकोटिलीनशशद्युतिम्।
जलधिमग्नां दधतमवनीं दशनशेखरसङ्गतिम्॥३॥
नमत कोलशरीरमद्भुतमखिलमुनिजनवन्दितम्।
जननपालननाशकारणनीलगिरिपतिमच्युतम्॥ध्रुवपदम्
रुचिरकिंशुकमुकुलकोटिविलीनमधुकरमञ्जुलम्।
दारयतमुदग्रनखरालीढं दितिसुतमतिबलम्॥४॥
नमत नरहरिरूपमद्भुतमखिलमुनिजनवन्दितम्।
जननपालननाशकारणनीलगिरिपतिमच्युतम्॥ध्रुवपदम्

पादनखरस्पर्शनपूतदण्डजातसुरापगम् ।
मृदुलचरणस्पर्शनक्षणदमितदितिजं सर्वगम् ।।५।।
नमत वामनरूपमद्भुतमखिलमुनिजनवन्दितम् ।
जननपालननाशकारणनीलगिरिपतिमच्युतम् ।। ध्रुवपदम्
धरणिपतिकुलकन्धरोत्थितरुधिरधाराभिप्लुतम् ।
धरणिमण्डलमनिशसन्ध्याकालमयमिव सन्धितम् ।।६।।
नमत भृगुसुतमद्भुताकृतिमखिलमुनिजनवन्दितम् ।
जननपालननाशकारणनीलगिरिपतिमच्युतम् ।। ध्रुवपदम्
त्रिदशमुनिगणनाशहेतुं त्रिपुरहरवरदर्पितम् ।
रावणं हत्वा शिरोभिः कन्दुकैरिव खेलितम् ।।७।।
नमत दशरथतनयमद्भुतमखिलमुनिजनवन्दितम् ।
जननपालननाशकारणनीलगिरिपतिमच्युतम् ।। ध्रुवपदम्
लाङ्गलायुधकोटिदर्शितनागसाह्वयघूर्णनम् ।
मुष्टिपातनविहितमत्तप्रलम्बासुरचूर्णनम् ।।८।।
नमत हलधररूपमद्भुतमखिलमुनिजनवन्दितम् ।
जननपालननाशकारणनीलगिरिपतिमच्युतम् ।। ध्रुवपदम्
गोपगोकुलरक्षणक्षणधारितातुलभूभृतम् ।
नीलमणिमयदण्डसङ्गतमातपत्रमिवोद्धृतम् ।।९।।
नमत कंसासुरनिसूदनमखिलमुनिजनवन्दितम् ।
जननपालननाशकारणनीलगिरिपतिमच्युतम् ।। ध्रुवपदम्
तुरगखुरपुटदलधरातलमतलखड्गविखण्डितम् ।
म्लेच्छकुलगलनालमविकलमाशुगेन सुसंहितम् ।।१०।।
नमत कल्किनमुग्रमद्भुतमखिलमुनिजनवन्दितम् ।
जननपालननाशकारणनीलगिरिपतिमच्युतम् ।। ध्रुवपदम्
नीलगिरिपतिचरणसरसिजमत्तमधुकररूपिणा ।
रचितमेवैतत् पुरुषोत्तमभूभुजातिचारुणा ।।११।।
नमत दशविधरूपमद्भुतमखिलमुनिजनवन्दितम् ।
जननपालननाशकारणनीलगिरिपतिमच्युतम् ।। ध्रुवपदम् ।

